इन्द्रियस्योपनायकत्वेनार्थादिभ्यो विशेषादिन्द्रियाणामर्थादिभ्यः पूर्वं लक्षणं, न च विशेषलक्षणमकृते सामान्यलक्षणे शक्यमिति भाष्यकारः प्रथममिन्द्रियाणां सामान्यलक्षणं निर्वेदोपयुक्तमाह । भोगसाधनानीति । अनेन यच्छरीरसंयुक्तं सत्कारक(१)दोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति सामान्यलक्षणं सूचितम् । साक्षात्प्रतीतिसाधनमिन्द्रियमिति वक्तव्ये भोगसाधनाभिधानं निर्वेदोपयोगीति । पारम्पर्येण च भोगसाधनत्वं घ्राणादीनां, साक्षान्मनस एव तत्साधनत्वात् , सुखदुःखसाक्षात्कारस्य भोगत्वात् ।

घ्राण–भ्यः(२) (सू. १२)॥ अत्रेन्द्रियाणीति लक्ष्यनिर्देशः, घ्राणादीनीत्यर्थः । तेषां पञ्चानां पञ्चैव लक्षणानीति कथयति । लक्षणसूत्राणीति । ( ६९ । २४ ) अपाततः सूत्रं विचार्यमाणानि च सूत्राणीत्यर्थः । समानजातीयं घ्राणादे रसनादि प्रतिनियतविषयत्वात् , असमानजातीयं तु मनआदि सर्वविषयमिति । जिघ्रतीत्यादिभाष्यनिराकरणीयशङ्कामाह । उद्देशोति । ( ७० । १ ) प्रमाणाद्युद्देशेन साम्यादित्यर्थः । लक्षणं हि विधेयं, लक्ष्यं चोद्देश्यं, ज्ञातं चोद्दिश्यतेऽज्ञातं च विधीयत इति, न चैकस्य युगपज्ज्ञानाज्ञाने सम्भवतः, नापि लक्ष्यलक्षणत्वे इति भावः । परिहरति । नेदं तथा यथोद्देश इत्यर्थः । कस्मात् करणभावात् स्वविषयग्रहणलक्षणत्वं यतो घ्राणादीनाम् । एतदुक्तं भवति । इन्द्रियाणामतीन्द्रियत्वात्सर्वदा स्वस्वविषयोपलब्धिकरणत्वेनैवानुमातव्यानि, तस्मात्स्वस्वविषयोपलब्धिसाधन-

( १ ) संस्कारकदोषेति । १ । २ पु० पाठः ।

( २ ) घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्राकारः । टीकायामाद्यन्ताक्षरलेखशैल्या तथैव स्थापितम् । एवमग्रेऽपि

त्वमेव समानासमानजातीयव्यवच्छेदकतया लक्षणं, तदेकार्थसमवायि तु घ्राणत्वादि लक्ष्यम्। अत्र च घ्राणादिशब्दाः पङ्कजादिपदवदवयवार्थं निमित्तीकृत्य क्वचित्सामान्यविशेषे वर्तन्ते, अवयवार्थस्य प्रतीयमानस्यासति बाधके परित्यागायोगात्। अश्वकर्णादौ वृक्षविशेषवाचके वाजिकर्णायोगेन बाधकेनावयवार्थपरित्यागात्। अवयवार्थयोगेऽपि गन्धाद्युपलब्धिसाधने सन्निकर्षादौ घ्राणादिशब्दाप्रयोगात् अवयवार्थान्वितं घ्राणत्वाद्येव घ्राणादिशब्दप्रवृत्तिनिमित्तं, तथा च घ्राणादिपदमेव घ्राणत्वादिपरं लक्ष्यनिर्देशः, तच्चेन्द्रियाणीत्यनेन सूचितं, तदेव त्ववयवार्थपरं लक्षणनिर्देशो घ्राणेत्यादि। न च सन्निकर्षेण गन्धोपलब्धिसाधनेन व्यभिचारः, इन्द्रियसामान्यलक्षणयुक्तस्य गन्धोपलब्धिसाधनत्वं न सन्निकर्षस्यास्ति। तदनेन जिघ्रतीत्यादि स्वविषयग्रहणलक्षणानि इत्यन्तं भाष्यं व्याख्यातम्। निर्वचनग्रहणेन पदप्रवृत्तिनिमित्तमात्रमुच्यते, तेन त्वक्पदमपि सङ्गृहीतं भवति। तस्यापि त्वक्स्थाने इन्द्रिये स्पर्शोपलब्धिसाधने एवोपचार इति। भूतेभ्य इति सूत्रावयवतात्पर्यपरं भाष्यं भूतेभ्य इति नानाप्रकृतीनामित्यादि, तद्वार्तिककारो व्याचष्टे। भूतेभ्य इति। पृथिव्यादीति। पृच्छति। कः पुनरिति। उत्तरम्। भूतगुणविशेषग्रहणसाधनत्वं, घ्राणेनैव पृथिव्या यो गुणविशेषो गन्धः स गृह्यते न रसनादिना। एवं रसनेनैवापां यो माधुर्यं गुणविशेषः स गृह्यते, एवं चक्षुषैव शुक्लभास्वरं रूपं तेजसः, एवं त्वचैवानुष्णाशीतस्पर्शोऽपाकजो वायोः, एवं श्रवणेनैव शब्दो नभस इति नियमः। अत्र च प्रयोगः, गन्धोपलब्धिः करणसाध्या, क्रियात्वात्, छिदिक्रियाकरणातिरिक्तकरणनिष्पाद्या, तदन्वयव्यतिरेकाननुविधाने सति कार्यत्वात्, या क्रिया यत्करणान्वयव्यतिरेकाननुविधाने सति कार्या सा सर्वा

तत्क्रियाकरणातिरिक्तकरणनिष्पाद्या, यथा पटादिक्रिया घटादिक्रियाकरणदण्डाद्यतिरिक्त(१)करणनिष्पाद्या, तथा चेयं, तस्मात्तथा । तच्च करणं चक्षुराद्यतिरिक्तं घ्राणं, तद् द्रव्यं, संयोगाधारत्व(२)त्, तच्च पार्थिवं, द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, पार्थिवान्तरवत् । एवं रसनादिष्वपि योज्यम् । तदिदमुक्तं, यज्जातीयमिन्द्रियं पार्थिवं पाथसीयं वा भवति, तस्य पृथिव्याः पाथसो यो गुणविशेषो गन्धो वा मधुर एव वा रसभेदस्तेन पृथिवी अब्वाय्वादिभ्य आपो वा पृथिव्यादिभ्यो व्यवच्छिद्यन्ते इतरेतरभूतव्यवच्छेदहेतुः स तेनैवेन्द्रियेण गृह्यते नान्येनेति । न चैवं रसना अपामिव पृथिव्या अपि रसभेदं गृह्णातीति पार्थिवी भवति, तथात्वे तया गन्धोऽप्युपलभ्येत । तेन तेनैवेन्द्रियेणेति नियमो गुणविशेषमवधारयति, न त्विन्द्रियमिति । अत्र च कर्णशष्कुलीसंयोगोपाधिना श्रोत्रस्य नभसः कथंचिद्भेदं विवक्षित्वा भूतेभ्य इति पञ्चम्यर्थो व्याख्यातः । अनेन खल्वाहङ्कारिकाणीन्द्रियाणीति यदाहुः साङ्ख्यास्तन्निराकृतम् । निराकरणहेतुमाह । ऐकात्म्य इति श्लिष्टं पदम् । सांख्यानां किल राद्धान्ते कारणात्मकं कार्य्यं, तच्च कारणमिन्द्रियाणामहङ्कार एक इत्यैकात्म्यमेककारणकत्वं, तथा चैकात्म्यमेकत्वं घ्राणादीनामित्यनियमः स्यादिति । तदेतद्विभजते । यदि पुनरिति । शङ्कते । एकेति । विभजते । अथेति । एकः पाकश्च एकोऽग्निसंयोगः, एकं चौष्ण्यमित्यर्थः । निराकरोति । न ब्रूम इति । यद्यप्यौष्ण्यं निमित्तं साधारणं, तथाऽपि गन्धाद्युत्पत्तौ पूर्वगन्धादिध्वंसानां भेदादुपपन्नं

---

( १ ) चक्रदण्डाद्यतिरिक्तवेमादि-पाठः ।

( २ ) घटादिवत् इत्यधिकः १ पाठः ।

कार्य्यनानात्वमिति । तदिदमुक्तं ये पूर्वे रूपादयः तेषां स्वगतो विशेषः प्रध्वंस इत्यर्थः । अथ रूपत्वादिसामान्यमेव कस्मात् न स्वगतो विशेष इत्यत आह । एवं च कृत्वेति । रूपत्वादिसामान्यानां तादवस्थ्ये न पक्वतरतमादिभेदः, प्रध्वंसानां तु स्तोकभूयस्त्वनिःशेषत्वेनोपपद्यत इति भावः । पुनः शङ्कते । एकं कर्म्मेति । निराकरोति । नेति । समवायिकारणं स्वाश्रयप्रत्यासत्तिं वाऽपेक्षत इति भावः । शङ्कते । यदि तर्हीति । ( ७१ । ३ )लक्षणहानिस्तथा च लक्ष्यहानिरित्यर्थः । निराकरोति । चरमभावनिमित्तान्तरं भावरूपमित्यर्थः । संयोगाभावं तूत्तरसंयोगजननायापेक्षत एव । उपसंहरति । तस्मादिति ॥ १२ ॥

इन्द्रियप्रकृतित्वं तु भूतलक्षणं वेदितव्यम् ॥ १३ ॥

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकारः, इमे त्विति । तुशब्देनार्थमात्राद्व्यवच्छिनत्ति । येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाधकत्वं मिथ्याज्ञानविषयीकृतानां तु संसारनिमित्तता त इमे इत्यर्थः ।

गन्ध-र्थाः (सू० १४ ) अत्र चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपत्तव्याः, तेषां च लक्षणं तदर्था इति । तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति । तेषामिन्द्रियाणामर्था इन्द्रियैरर्थ्यमाणत्वमर्थानां लक्षणम् । एतावतैव लक्षणे पर्य्यवसिते सुहृद्भावेन विभागाभिधानं(१) पृथिव्यादिगुणा इति । पृथिव्यप्तेजांसि च गुणाश्च धर्म्माः सङ्ख्याकर्म्मादयः । विभागेऽप्येतावताऽवगते गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम् । पृथिव्यादीनामिति भाष्यं न षष्ठीसमासज्ञा-

---

(१) पुनरविभागाभिधानमिति १ पाठः ।

पनार्थमपि त्वर्थाभिधानमात्रम् । यथाविनियोगमिति । यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्र्येकनियमेन विनियुक्ताः शब्दश्चाकाश एवेत्यर्थः । तदर्था इति लक्षणपदं व्याचष्टे । इन्द्रियाणामिति । येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः, येन चेह गन्धादयस्तदनतिक्रमेणे-त्यर्थः । अत्र वार्त्तिककारः पृथिव्यादिगुणा इत्यत्रानेकसमासप्रतिभासनात्संशयं कृत्वा द्वन्द्वसमासमवधारयति । पृथिव्यादिगुणा इति । षष्ठीसमासेनाभिन्नार्थत्वात्सप्तमीसमासो न दर्शितः । ननु कण्ठेकाल इतिवद्वैयधिकरण्येऽपि बहुव्रीहिर्भविष्यति, पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यस्ते तथा । तथा हि परमाणुगता गन्धादयोऽवयविनि गन्धाद्यारभन्ते नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत आह । न चान्यथेति । ( ७२ । ४ ) ज्ञापकवशात्क्वचिद्व्यधिकरणानां बहुव्रीहिर्ज्ञापककृतं च न सर्वत्र, न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादनं क्वचिन्निर्वेदायोपयुज्यत इति भावः । अन्यसमासः कर्मधारयादिः । द्वन्द्वमवधारितमाक्षिपति । न द्वन्द्व इति । समाधत्ते । नोभयस्यापीति । पृथिव्यादिग्रहणेनेति । यद्यादिशब्देन वाय्वादयो गृह्येरन्, तदर्था इति लक्षणमव्यापकं स्यात्, तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । गुणग्रहणेन सर्व इति आश्रितानाश्रिताभिप्रायं, गुणशब्दस्य धर्म्मवचनत्वात् । विशेषस्तु रेखोपरेखादिः, न त्वन्त्यः, तस्यातीन्द्रियत्वात् । एतेषां च यथायोगं मिथ्याज्ञानसम्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम् । चोदयति । गन्धेति । परिहरति । न कर्तव्यं ( ७३ । ३ ) लघुसूत्रं, गन्धादीनां पृथगभिधानं कर्तव्यमित्यर्थः । नियममाह । इन्द्रियार्थानीति । तत्रेति । अनियतेषु मध्ये । पृथिव्यसंजा-

सि द्वीन्द्रियग्राह्याणि शेषश्च गुणराशिः संख्यादिर्विशेषा-
न्तो द्वीन्द्रियग्राह्य इत्यर्थः। तथा सर्वेन्द्रियग्राह्य इत्यर्थः।

अत्र बौद्धमुत्थापयति। दर्शनस्पर्शनाभ्यामिति। त-
स्य पर्य्यनुयोगमाह। स इति। स्वसम्वेदनेन मानसेन
वा रूपाद्यालम्बनप्रत्ययो रूपादिविशिष्टो यथाऽनुभूयते, एवं रू-
पाद्यतिरिक्तघटादिविशिष्टोऽनुभूयत इत्यर्थः। अत्र पर आह।
रूपादिभ्यस्तथा सन्निविष्टेभ्य इति। तथेत्याकारं निर्दि-
शति। सन्निवेशो व्यवस्थानम्। रूपादिपरमाणव एव तेनाका-
रेणोत्पन्ना एकोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्यु-
च्यन्ते, अनुरञ्जनादिकया तु रूपादिव्यपदेशः। यथाह।

"घट इत्यपि च रूपादय एवैकार्थक्रियाकारिणस्तथा व्य-
पदिश्यन्ते।"

निराकरोति। नाकारार्थेति। तथार्थस्य यथापदार्थेन नित्या-
भिसम्बन्धात् यथा घटस्तथा सन्निविष्टा रूपादय इत्यर्थो गम्यते, तेन
घटाकारेण घटसादृश्येनेत्ययमर्थः, तथा च दूषणमिति। दूषणा-
न्तरमाह। रूपादिमात्रे चेति। (७४। १) न तावद्रूपादि-
क्षण एको घटः, क्षणान्तरे तत्प्रयोगाभावप्रसङ्गात्, तस्माद्रूपादि-
मात्रमविवक्षितभेदं(१),तथासत्येतद्दूषणमित्यर्थः। शङ्कते। सं-
स्थानभेदादिति। यथासंस्थाना रूपादयोऽर्था अनुभूयन्ते
तथासन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः। निराकरोति। नै-
तदिति। अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम्, अनन्य-
त्वे व्यर्थाभिधानम्। शङ्कते। घटादिप्रत्यया इति। एकाने-
कविचारासहत्वाद् असन्त एव घटादयोऽनादिविकल्पवासना-
जनितविकल्पप्रत्ययप्रतिभासमानाः। शब्दशब्देन विकल्पमु-

(१) अविवक्षितमिति पाठः।

पक्षयति शब्दवासनावशादिति । निराकरोति । तदयु-
क्तमिति । बीजं मिथ्याप्रत्ययस्य सम्यक्प्रत्ययाविषयोऽर्थः, त-
स्य क्वचिदभ्युपगमेऽभिमतार्थहानमित्यर्थः । यस्तु भिन्नकोऽकल-
ष्यादितया भूते आदिमान् मिथ्याप्रत्ययः सम्यग्ज्ञानं निमित्ती-
करोति, अयं पुनरनादिः पूर्वपूर्वमिथ्याप्रत्ययजन्मा मिथ्याप्रत्य-
यप्रवाहः, कुतमत्र सम्यग्ज्ञानेनेति, तं प्रत्याह । मिथ्याप्रत्यया-
श्चैत इति । रूपाद्यव्यतिरिक्ते अवयविन इत्यर्थः । परस्त्वव्यतिरेके
प्रमाणमाह । न नास्तीति । न हि मोसतोयातिरिक्तः कश्चिद्यूथो
नाम, नापि तृणराजतरु(१)व्यतिरिक्ता पङ्क्तिर्नाम । दूषयति ।
नायं हेतुरिति । ये घटादिभावमापन्ना भवतां दर्शने इति ।
कामेऽष्टद्रव्यकोऽणुरशब्द(२)इति । (७५ । ३) रूपधातुररू-
पधातुः कामधातुरिति त्रैधातुकं जगत् । तत्र कामधातुस्वरूप-
मुक्तं, कामे—कामधातौ । अष्टद्रव्यकोऽणुः—रूपरसगन्धस्पर्शा
इति चत्वारि द्रव्याणि, पृथिव्यप्तेजोवायुरिति चत्वारि, द्रव्यश-
ब्दो वस्तुवचनः, तेषामष्टद्रव्यकोऽणुरित्यागमः । सोऽयं रूपाद्य-
तिरिक्तपृथिव्याद्यनभ्युपगमे बाध्येत । अथ वैयात्यादुच्यते ।
पृथिव्यादीनामिति । ततश्च सांवृतत्वेनाष्टसङ्ख्यासिद्धेर्नागम-
विरोध इति भावः । उत्तरम् । तथाऽपीति । मा भूवन् वस्तु-
तः, उभयेऽपि सांवृता भविष्यन्तीत्यत आह । संहन्यमान-
स्येति । यो हि यत्तन्त्रः स तदभावमभ्युपगम्याशक्याभ्युपगमः,
न खलु संयुज्यमानानामभावे संयोगः शक्याभ्युपगम इत्यर्थः ।
न च संवृतिः, सा हि पररूपं स्वरूपेण संवृणोति, संहन्यमाना-
भावे च न सङ्घातो न संहन्यमाना इति किमनया स्वरूपेणा-

( १ ) तृणराज-इति लिखितपुस्तके पाठः ।
( २ ) णुशब्दः-इति लिखितपुस्तके पाठः ।

म्रियेतेति भावः। तदेवं तदग्रहे तद्बुद्ध्यभावादित्यस्य व्याघातदोषं दर्शयित्वा स्वसामर्थ्यालोचनेन न विवक्षितलिङ्गाभिधायिता किं त्वसम्बद्धार्थता हेतुवचनस्येत्याह। तदग्रहे इति। (७५।९) एवं किलात्राभिमतम्। पृथिव्यादयो रूपादिभ्योऽभिन्ना रूपाद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति। तदेतन्न तदग्रहे तद्बुद्ध्यभावादित्यनेन शक्यं वक्तुं, तदग्रह इत्यत्र तच्छब्दः प्रधानपरामर्शी पृथिव्यादयश्च धर्मितया प्रधानमिति त एव परामर्ष्टव्याः, तथा च पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति स्यात्। तथा च प्रतिज्ञातस्तेषां रूपाद्यभेदो न सिध्येदित्यसम्बद्धम्, अथ रूपादयः पक्षीक्रियन्ते, तथापि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति स्यात्, तथाऽपि न प्रतिज्ञातार्थसिद्धिरित्यसम्बद्धार्थमित्यर्थः। एवं शब्दान्तरेणापि प्रतिज्ञाप्रयोगे तुल्यः प्रसङ्ग इत्याह। एवं रूपादिमात्रमिति। (७८।१२)प्रतिज्ञादोषमाह। सर्वत्र चेति। नानात्वैकार्थसम्बन्धनियताया बहुत्वसङ्ख्याया अभेदैकार्थनियतैकत्वसङ्ख्यया सामानाधिकरण्यविरोध इत्यर्थः। तदेतदनैकान्तिकमिति चोदयति। नन्विति। निराकरोति। तन्नानभ्युपगमादिति। समानं धर्म्मसाधनं (७५।२३) यमाः पञ्च नियमाः पञ्च ब्रह्मचारिगृहस्थवानप्रस्थयतीनामविशेषेणैव दश धर्मसाधनं, तेषां धर्म्मसाधनत्वमेकं चातुराश्रम्यमिति प्रकृतिगता विभक्तिराह। आश्रमप्रकृतिगता तु विभक्तिः प्रकृत्यर्थसमवेतामेव बहुत्वसङ्ख्यामाह। समानार्थानामपि प्रकृतीनां रूपभेदेन तत्परस्य प्रत्ययस्य सामर्थ्यभेदात्। यथाऽप्तोयशब्दयोस्तुल्यार्थत्वेऽपि तोयशब्दात्परा विभक्तिस्तोयानीति तोयसमवेतामेव बहुत्वसङ्ख्यामाह। आप इति तु न तोयगताम्, अपि तु तत्सम्बद्धगतां, तत्सम्बद्धाश्च

तदवयवास्तद्गता रूपादयो वा बहव इत्येकस्यामपि पाथःकणिकायां बहुवचनोपपत्तिराप इति । न च सोरस्ताडं क्रन्दतोऽपि लोकस्यानिवृत्तेर्नैवमिति साम्प्रतम् । लोको हि दृष्टव्यवहारमात्रप्रयोजनो न विवेचयति, परीक्षकास्तु तदनुसारिणो विवेचयन्त्येव । अन्यथा हि प्रत्यक्षादिलक्षणप्रणयनवैयर्थ्यप्रसङ्गः । एतेन दाराः षण्णगरीत्यादयो व्याख्याताः । षाड्गुण्यमपि षण्णां गुणानामेकं राजप्रयोजनसाधकत्वं, वैशेषिकमित्यत्रापि विशेषाणां समानासमानजातीयव्यवच्छेदकत्वमेकमुच्यत इति गमयितव्यम् । हेतुदोषमाह । असिद्धोऽपीति । ( ७५ । २५ ) स्फटिकस्य धवलं रूपं, तच्च नीलद्रव्यानुषङ्गादभिभूतं न प्रतीयते, स्फटिकश्च प्रतीयते, न च नीलस्य स्फटिकक्षणस्योत्पत्तिरिति तृतीये निवेदयिष्यते, तस्मादसिद्धो हेतुरित्यर्थः । दृष्टान्तश्च साध्यविकल इत्याह । योऽप्ययमिति । ( ७६ । ३ । ) उत्पन्नपाकजानां तैले सर्पिषि वा पिष्टमांसपिण्डावयवानां द्रव्यान्तरेण तोयेन संयुक्तानां पाकजोत्पत्तौ सत्याम् । न चासौ सहसेत्युक्तं कालविशेषानुग्रहे सतीति । स च संयोगभेद एव तोयमांसयोर्न त्ववयवी, विजातीययोरनारम्भकत्वात् । नापि यूषजातीयं तोयसंयोगि द्रव्यं क्षीरजातीयमिवेति युक्तम् । तोयविरहे काठिन्येऽपि क्षीरबुद्धिव्यपदेशयोस्तादवस्थात् , इह तु काठिन्ये न यूषबुद्धिव्यपदेशाविति सम्बन्धभेद एव तोयमांसयोर्यूष इति न्याय्यम् । स चानुभवसिद्धः संयोगिव्यतिरिक्तः । एवं बहुत्वसङ्ख्यापि सङ्ख्येयातिरिक्ताऽनुभवसिद्धैवेति । एवं तत्र तत्र व्याख्येयम् । अनाद्यन्तेष्वनारब्धावयविष्विति द्रष्टव्यम् । न च परकीयसाधनदोषोद्भावनमात्रात्स्वपक्षसिद्धिरिति सिद्धा-

नितं साधनं पृच्छति । अथ रूपादिभ्योऽर्थान्तरे द्रव्ये किं प्रमाणमिति । यतोऽयं परो रूपादिभ्योऽर्थान्तरं द्रव्यं प्रत्यक्षेण विद्वानपि स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारो न तथा व्यवहरति, अतोऽनेनानुमानेन स व्यवहार्यते । अस्ति हि सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवच्चन्दनस्य रूपादय इति व्यपदेशः । तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति, चन्दनोपलम्भमपि, अन्यथा तद्बुद्ध्यभावादित्येतावन्मात्रे वक्तव्ये कथमाह तदग्रह इति, तेनाधिगच्छामो रूपादिग्रहेऽस्य चन्दनबुद्धिरभिमतेति, न चासौ मनोमात्रयोनिः स्मार्त्तीति न्याय्यम्, उपपादितमेतस्याः सविकल्पिकाया इन्द्रियजन्यत्वं व्यवसायात्मकपदव्याख्यानावसरे । द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते । तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य(१) सोऽयं चन्दनो विवादगोचरेभ्यो रूपादिभ्यो भिन्नः स्वयमुपलभ्यस्य समस्तैरुपलभ्यै(२)र्व्यपदिश्यमानत्वात् । प्रधानमपि साङ्ख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति, तस्मिन्नस्यार्थमुपलभ्यस्येति । प्रधानं तु काल्पनिकं नोपलभ्यते, तथाऽपि रूपादीनां मूलकारणं प्रधानमित्यस्ति साङ्ख्यानां व्यपदेशोऽत उक्तमुपलभ्यैरिति । तथाऽपि रूपादीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यत इत्युक्तं समस्तैरिति । अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति । उपलभ्यस्योपलभ्येनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपावगमसमयेऽनुमेयेभ्यो रसादिभ्य(३) एका-

---

(१) चन्दनस्य व्यपदेश्यस्य—पाठः ।

(२) मुपलभ्यस्य च—पाठः ।

(३) रूपादिभ्य इति १ । २ पु० पा० ।

न्ततो व्यपदेशं व्यावर्त्तयितुं न त्वस्यानुमान उपयोग इति । अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति । सेनावनादिभिरिति । सङ्ख्याया असत्त्वमाशङ्क्य निराकरोति । तदसत्त्वमिति चोदिति । विधीयमानं प्रतिषिध्यमानमिति (७७ । १ ) यथासङ्ख्यम् । निषेधस्य विध्यधीननिरूपणतया निषेध्यमेकत्वमङ्गीकार्यं तच्च सङ्ख्येत्यर्थः । ननु सन्त्वमी प्रत्ययास्ते तु द्रव्यमात्रनिबन्धना भविष्यन्ति, कृतं सङ्ख्ययेत्यत आह । विशिष्टाश्चेति । न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेनेत्यर्थः । प्रयोगान्तरमाह । तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति । घटप्रत्ययस्य विषयः निमित्तं च घटः तत्प्रत्ययव्यः तिरेकेणेति । नहि विशिष्टसङ्ख्यादिप्रत्ययस्य निमित्तान्तराकाङ्क्षि त्वात् तत्किमर्थमत उक्तमुत्पत्ताविति । चर्मणि द्वीपिनं हन्तीतिवत् । घटादिविषयनिमित्तव्यतिरेकभाज इत्यत्रापि प्रत्ययग्रहणं कर्तव्यम् । चोदयति । महत्पुष्पितेति । न सङ्ख्याया गुणस्य परिमाणगुणयोगसम्भव इत्यर्थः । परिहरति । नैष दोष इति । स्थानशब्देन तिष्ठतीति व्युत्पत्त्या सङ्ख्योच्यते, सा येषामस्ति ते गजवाजिपदातिप्रभृतयः स्थानिनः प्रत्येकं महान्तः, तत्र ते क्वचिच्छतमेव क्वचित्पुनस्तज्जातीयस्थान्यन्तरसन्निधाने सत्युपचिताः सहस्रं भवन्ति । तेन बहुत्वसङ्ख्योपचयोपकरणात्तदेकार्थसमवेतमहत्त्वोपचारान्महती सेनेत्युच्यते । न चैतावता यत्र शतं गजादयो यत्र च सहस्रं तयोः सेनयोर्महत्त्वाविशेषः, उपचयापचयोपकरणत्वेन विशेषितत्वात् । एवं पुष्पितवनादयो द्रष्टव्याः । प्रत्ययभेदाद्द्रव्यादिभ्यः सङ्ख्याया भेदमुक्त्वा व्यपदेशभेदादप्याह । अत एवेति । स्थाणुशब्देनापीति । ( ७८ । ७ ) मूर्त्तानां समानदेशत्वाभावात् पर्वसु खादिरश्च

स्थाणुश्च समवेतौ । न चावस्थितसंयोगेभ्यस्तरुविनाशापेक्षेभ्यः स्थाणोरुत्पत्तिरिति युक्तम् । यस्य द्रव्यस्य यावत्संयोगप्रचयोऽसमवायिकारणं स तावानुत्पन्नमात्र एव तज्जनकः, तस्य च क्षेपायोगात्, तस्मात्पर्वणां संस्थानविशेष एव स्थाणुरिति गमयितव्यम् । अथावस्थितसंयोगानां द्रव्यनाशापेक्षाणां जनकत्वं, ततः संयोगप्रचयपदेन स्थाणुत्वसामान्यविशेषवद् द्रव्यमुपलक्षणीयम् । तच्च खादिरतरोर्भिन्नमिति । प्रतिमाया महारजतमय्या अवयविन्याः शरीरं संस्थानमेव । एवं शिलापुत्रकस्यावयविनः संस्थानमेव शरीरम् । शङ्कते । गुणसमुदायेति । अतादात्म्येनाग्रहणं व्यतिरेकेणाग्रहणं, पृथक्शब्दोऽप्यतादात्म्यं ब्रूते । दूषयति । अग्रहणस्येति । सतामपि वस्तूनामनुपलम्भो यथा मूलकीलकादीनां(१) प्रमाणाभावेन, शशविषाणादीनां चानुपलम्भो ग्राह्याभावेन, तस्माद्व्यतिरेकाग्रहणमात्रं हेतुरनैकान्त इति । शङ्कते । ग्राह्याभावादिति चेत् । ग्राह्याभावे सत्यग्रहणमिति हेतुः, न त्वग्रहणमात्रमित्यर्थः । दूषयति । प्रतिज्ञार्थेनेति । प्रतिज्ञार्थस्यासिद्धत्वेन तद्विशिष्टो हेतुरसिद्ध इत्यर्थः । शङ्कते । ग्रहणेति । ग्रहणं प्रमाणम् । निराकरोति । न प्रमाणाभावमात्राद्व्यतिरेकप्रतिषेधः । यस्तु योग्यप्रमाणाभावादिति विशेषहेतुः, तं प्रत्याह । यश्च तदग्रह इति । असिद्धता हेतुदोषः । दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानमेव रूपादिव्यतिरिक्तग्रहणमतो गुणसमुदायव्यतिरेकेणाग्रहणमित्यसिद्धो हेतुरिति । एकत्रान्यत्वे प्रमाणानामुपपत्तेः, एकत्रानन्यत्वे प्रमाणानामनुपपत्तेरिति । प्रकृतमुपसंहरति । तस्मादिति ॥ १४ ॥

(१) मूलककीलकोदकादीनामिति लिखितपुस्तके पाठः ।

आत्मादीनां बुद्धिहेतूनां लक्षणानन्तरं हेतुमतीं बुद्धिं लक्षयतीत्याह वार्त्तिककारः, अथ बुद्धेरवसरप्राप्तायाः इति। लक्षणं तावत्प्रकृतत्वादपदेष्टव्यमेव, तदपदेशद्वारेणान्यदपि किञ्चित्सूचनीयम्, अत एवोक्तं, सूत्रमिति। अन्यच्च साङ्ख्यमतनिराकरणम्। यथोक्तं भाष्यकारेण, अचेतनस्य करणस्य बुद्धेरिति। इवकारेण नेदं प्रत्याख्यानपरम्, अपि तु लक्षणपरादयमर्थः प्रतीयमानोऽपेक्षितश्च नोपेक्षणीय इत्युक्तं भवति।

बुद्धि—रम् ( सू. १५ ) ॥ सूत्रतात्पर्यमाह। एतैरिति। पृच्छति। कथमिति। समानासमानजातीयव्यवच्छेदकं हि लक्षणमव्यभिचारितया, पर्यायशब्दाश्च सङ्केतमात्राधीनप्रवृत्तयः क्व नाम न सम्भवन्ति, तस्मान्नैते लक्षणमिति भावः। उत्तरम्, व्यवच्छेदेति। ( ७९। १ ) ननु व्यभिचारसम्भवेन व्यवच्छेदकमयुक्तमत आह। एतैश्चेति। सङ्केतो हि द्वेधा, सार्वजनीनो यथा गौरिति गोजातीयस्य वाचकः। प्रादेशिकश्च यथा चैत्र इति पुरुषभेदस्य। तत्र सार्वजनीनः शक्नोति व्यवच्छेदबुद्धिं भावयितुं, तद्विवक्षयैवोक्तमेतैश्चेति। उपपत्तिसामर्थ्यादिति भाष्यावयवं व्याचष्टे। पर्य्यायेति। अचेतनस्येत्यादि भाष्यम्, तद्व्याचष्टे। य आहुर्बुद्धेरिति। बुद्धिः किल त्रैगुण्यविकारः, त्रैगुण्यं चाचेतनमित्यचेतनं केवलमिन्द्रियप्रणालिकयाऽर्थाकारेण परिणमते, चितिशक्तिश्चापरिणामिनी नित्यचैतन्यस्वभावा, तस्याः सन्निधानादयस्कान्तमणिकल्पा बुद्धिस्तत्प्रतिबिम्बोद्ग्राहितया चैतन्यरूपतामापन्नेवार्थाकारपरिणताऽर्थं चेतयते, तेन योऽसौ नीलाकारः परिणामो बुद्धेः, स ज्ञानलक्षणा वृत्तिरित्युच्यते। आत्मप्रतिबिम्बस्य तु बुद्धिसङ्क्रान्तस्य

यो बुद्ध्याकारनीलसम्बन्धः स आत्मनो व्यापार इवोपलब्धि- रात्मनो वृत्तिरित्याख्यायते, तदिदं बुद्धितत्त्वं जडप्रकृतितया इन्दुमण्डलमिव स्वयमप्रकाशं चैतन्यमार्त्तण्डमण्डलच्छायापत्त्या प्रकाशते प्रकाशयति चार्थानिति, तन्निराकरणाय पर्य्यायोप- न्यासः, नात्मवृत्तेरुपलब्धेरन्याऽस्ति बुद्धिः, नापि बुद्धिवृत्ति- र्ज्ञानमन्यदिति। अयमभिसन्धिः, न तावद्बुद्धेरात्मच्छायाप- त्तिरिन्दाविव मार्त्तण्डमण्डलतेजःसङ्क्रान्तिः पारमार्थिकी, चि- तेरपरिणामितया सङ्क्रमायोगात्। तस्माद् भ्रान्तिः, सा च न तावद्बुद्धेः, तस्या अचैतन्यात्। नाप्यात्मनः, तस्यावृत्तिकत्वात्, तथात्वे वा परिणामापत्तेः। तस्मात्कृपणधनमिवात्मचैतन्यं न स्वपरोपकारीति बुद्धेः स्वाभाविकं चैतन्यमास्थेयं, तथा चोभय- चैतन्ये दूषणमुक्तम्, प्रत्ययव्यवस्थया यदेककर्तृकत्वानुमानं तन्न स्यादित्यर्थः। अथ द्वयोश्चेतनयोरेका वृत्तिर्वृत्ति- भेदाग्रहो वा, तेनैककर्तृकत्वाभिमान इत्यत आह। बुद्धिश्चैत्य- विशिष्टायामिति। बुद्धिर्ज्ञानसाधनमिति। बुद्ध्यतेऽनेनेति व्युत्पत्त्या मन उच्यते। गन्धादिविषयतया सुखदुःखविषयतया चेयं बुद्धिर्भाव्यमाना निर्वेदाय कल्पत इति॥ १५॥

भाष्यकारः क्रमप्राप्तं मनोलक्षणसूत्रमवतारयन्नुत्सूत्रमन्या- न्यपि लक्षणान्याह। स्मृतीत्यादि। सुखादिप्रत्यक्षमित्यादि- शब्देन विषयतयेच्छादयः सङ्गृहीताः। इच्छादय इत्यादि- शब्देन कार्य्यतया सुखादयः सङ्गृहीताः।

युग-ज्ञम् (सू० १६) ॥ अनिन्द्रियनिमित्ताः अबाह्येन्द्रियनिमित्ता इत्यर्थः। स्मृतीत्यादिभाष्यस्य वार्तिककारस्तात्पर्य्यमाह। स्मृतीति। अनिन्द्रियेत्यादि भाष्यं व्याचष्टे। यस्मादिति। इन्द्रियगतरूपादिव्यावृत्त्यर्थ-

युक्तमिन्द्रियसंयोगमिति । तथाऽप्याकाशादीनां मनस्त्वं मा भूदत उक्तं सहकारीति । तथाऽप्यालोकस्य माभूदत उक्तं निमित्तान्तरमिति । तथाऽप्यात्मनो माभूदत उक्तमव्यापीति । ( ८० । १ ) आक्षिप्य भाष्यं समाधत्ते । कथं पुनरिति । ( ८० । ३ ) चक्षुरादिभ्योऽनुत्पत्तौ सत्यां क्रियात्वात् । अत्र च य आत्मनो विशेषगुणास्ते सर्वे इन्द्रियजन्मानो यथा गन्धादिप्रत्ययाः, तथा च विवादाध्यासिताः स्मृत्यादयः, तस्मात्तेपीन्द्रियजन्मानः । एवं च संस्कारादिषु न करणत्वप्रसङ्ग इति । सौत्रं हेतुमाक्षिप्य समाधत्ते । अथायुगपदिति । सम्बन्धभेदादिति । ( ८१ । ९ ) यदा-तस्यैव मनःसंयुक्तस्येन्द्रियस्य क्रमेण नीलादयोऽर्थाः सम्बध्यन्ते तदा तत्क्रमात् क्रम इत्यर्थः । बुभुत्साक्रमं गृहीत्वा सिद्धान्तेऽपि मनःपरित्यागो मा भूदत उक्तं सत्यां बुभुत्सायामयुगपद्ग्रहण इति । न हि किञ्चित्करणं सम्बद्धमपि सदिति । यद्येवं स्याद् धारावाहिकज्ञानोत्पत्तिर्न स्यात्, द्वितीयादिज्ञानेष्वपि सैव सामग्रीति सकृदेव यावत्कर्त्तव्यकरणासमर्थस्य क्षेपायोगात्, क्षेपयोगे वा पश्चादपि न जनयेत् अविशेषात् । न च कर्तुरप्ययं क्रमकारिताधर्मः, स ह्यनेककरणाधिष्ठानेन युगपन्नानाकार्याणि करोति, युगपन्माणवको गच्छति पठति वहति चाचार्यस्य कमण्डलुमिति, तस्मात्सर्वमवदातम् । तदिदमपि मनः स्मृत्यादिसाधनतया भाव्यमानं निर्वेदाय कल्पत इति सिद्धम् ॥ १६ ॥

क्रमप्राप्ता त्विति भाष्यं । प्रवृत्तिलक्षणमवतारयितुम् । मनसोऽपि प्रवृत्तिर्दर्शनीया, न चाप्रतिपादिते मनसि शक्या दर्शयितुमिति मनसोऽनन्तरत्वं प्रवृत्तेरित्यर्थः ।

प्रवृ-म्भः ( सू १७ )। आरम्भः प्रवृत्तिः, सा द्विविधा ज्ञानहेतुः क्रियाहेतुश्च। तत्र या ज्ञानोत्पादद्वारेण पुण्यपापहेतुः सा वाक्प्रवृत्तिः। वागिति च ज्ञापकहेतूपलक्षणम्, तेन मनसा इष्टदेवताद्यनुचिन्तनं चक्षुरादिभिः साध्वसाधुदर्शनादि सूचितं भवति। क्रियाहेतुर्द्वयी, कायनिमित्ता मनोनिमित्ता चेति। तदेतद्वार्त्तिककारो विभजते। शारीरेणेति। (८२। १) ननु प्रवृत्तेर्जन्महेतुत्वमुक्तं द्वितीयसूत्रे, न चेयं क्षणिका सती आमुष्मिकं जन्म साधयितुमर्हति, तस्माद् द्वितीयसूत्रव्याघात इति चोदयति। क्षणिकत्वादिति। परिहरति। नेति॥ १७॥

प्रयोज्यव्यापारपूर्वकत्वेन प्रयोजकव्यापारनिरूपणात् प्रवृत्त्यनन्तरं दोषलक्षणम्।

प्रव-षाः ( सू १८ )॥ रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्त्तमानं प्रवर्तयतः, तयोर्धर्मः प्रवर्त्तना, सा च मोहैकार्थसमवायः, तावद्ध्ययं रागादिवशः स्पन्दते यावदस्य मोहो वर्तते इति। प्रत्यात्मवेदनीया इति चोद्यभाष्यम्, तस्यार्थः, लक्षणं खल्वनुमानं, न च प्रत्यात्मवेदनीयेषु स्फुटतरेषु तद्युक्तमिति भावः। परिहारभाष्यम्, कर्म्मलक्षणा इति। तस्यार्थः, स्वरूपतः स्फुटत्वेऽपि न निर्वेदाविषयतया स्फुटता, तया चेह प्रयोजनं, प्रवर्त्तनात्वेन चैते निर्वेदविषयाः, सा च प्रवृत्त्या कार्य्येण लक्ष्यत इति कर्म्मलक्षणा इत्युक्तम्। यतः कर्म्मणा प्रवृत्त्या प्रवर्त्तकरागादियुक्ताः पुरुषा लक्ष्यन्तेऽतो रागादीनां प्रवर्त्तनावत्त्वमपि लक्षितं भवति। ब्रह्म नोक्तं भवतीति। स्वरूपमात्रं रागादीनामुक्तं भवति, न तु प्रवर्तनावत्त्वमपि तेषामित्यर्थः। तदेतत्सर्वं वार्त्तिककारः प्रश्नपूर्वकं व्याचष्टे।

का पुनरिति । अवशोऽस्वतन्त्रः । सा पुनरियं प्रवर्त्तना प्रवर्त्तकानां दोषाणां व्यापारः कथं गम्यते, दोषा हि गम्यन्ते, न तु तेषां प्रवृत्तिहेतुत्वमपीत्यर्थः । उत्तरम् , प्रत्यात्ममिति । स्वपरात्मनोर्यथासङ्ख्यं प्रत्यक्षानुमानाभ्याम् । मोहैकार्थसमवायो हि रागादीनां मानसप्रत्यक्षवेदनीय इत्यर्थः ॥ १८ ॥

उद्देशक्रमप्राप्तं प्रेत्यभावं लक्षयति ।

पुन-वः ( सू १९ ) ॥ सत्त्वनिकायः प्राणिनिकायः । नन्वात्मनो नोत्पत्तिः सम्भवति, नित्यत्वादित्यत आह भाष्यकारः, उत्पन्नस्येति सम्बद्धस्य । तदेतद्वार्त्तिककारो व्याचष्टे । पूर्वेति । पुनर्ग्रहणमिति । पुनरित्यभ्यासमाह, तथा चानादिता सूचिता भवति । तदेतद्वार्त्तिकजातं द्वितीयसूत्रे कृतव्याख्यानम् । पूर्वाभ्यस्तसूत्रे चायमर्थ उपपादयिष्यते । आजरञ्जरीभाव(१) ( ८३ । ९ ) इत्यागमभाषयाऽस्यार्थस्यागमिकत्वं सूचयति । क्रियामिति । उपसर्पणमपसर्पणं चेत्यर्थः ॥ १९ ॥

यद्यपि शरीरेन्द्रियबुद्धिसुखदुःखभोगातिरिक्तं गौणमुख्यभिन्नं फलं नास्ति, ते च यथायोगं पूर्वं लक्षितास्तेन च रूपेण निर्वेदोपयोगिनस्तथाऽपि प्रवृत्तिदोषजनितत्वेनापि रूपेणामी निर्वेदोपयोगिन इति तेन रूपेण लक्ष्यन्ते ।

प्रवृ-लम् ( सू २० ) ॥ अत्र च प्रवृत्तिजनित इति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावोऽपि तु प्रवृत्तिकार्ये सुखदुःखे अपि प्रतीति दर्शनार्थम् । दोषसलिलावसिक्तायां खलु आत्मभूमौ धर्म्माधर्म्मबीजे सुखदुःखे जनयतः,

(१) जातमंजबीभाव तृ॰ पु॰ पाठः ।

नान्यथा । न चास्ति सम्भवो न तत्र हृष्यति तच्च तस्य सुखं, न च तद् द्वेष्टि तच्च तस्य दुःखमिति सूत्रेऽर्थग्रहणं गौणमुख्यफलावरोधार्थम् । भाष्ये च निष्ठा समाप्तिः, सा च प्रलयेऽप्यस्तीत्यत उक्तम्, पर्यवसानमिति । अवसानमात्रमस्ति न पुनः परितः, पुनरपि सर्गहानोपादानयोर्मार्गादित्यर्थः । सुबोधं वार्त्तिकम् ॥ २१ ॥

बाध-त्वम् ( सू. २१ )॥ अत्र च बाधनेति बाधनाविषयां बुद्धिं लक्षयति, तेन बाधना च तदनुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति । सैव हि बाधनाबुद्धिर्दुःखे मुख्या शरीरादौ गौणीति । अलमेभिरिति प्रत्ययो निर्वेदः । वशितया योगिनः स्वयमुपनतेषु विषयेषु औदासीन्यमुपेक्षाबुद्धिर्वैराग्यम् । लक्षणाशब्द इति वार्त्तिकम् । अनुषङ्गश्च सम्बन्धः, स च बाधनायां विषयविषयिभावः । शरीरादिषूक्तः । केचिद्विरक्तंमन्या मन्यन्ते न दुःखं नामास्ति स्वरूपत इति, तान्निराचिकीर्षुराह । स्वरूपतस्तु दुःखमिति । ( ८४ । २ ) विकल्पो विशेषः । अभावफलत्वप्रसङ्गादिति । यद्यप्युपात्तदुरितक्षयहेतवोऽपि धर्माः सन्ति, तथाऽप्यधिकोत्कर्षशालित्वादिफलानां दर्शपौर्णमासादीनां सहस्रसंवत्सरपर्यन्तानां विधायकेभ्यो वचनेभ्यो भावफल एव धर्मो गम्यते, भावस्यैवोत्कर्षशालित्वादिति ॥ २१ ॥

क्रमप्राप्तमपवर्गलक्षणमवतारयति भाष्यकारः, यत्र त्विति ।

तद्-र्गः ( सू २२ )॥ तदित्यनन्तरं गौणमुख्यभेदभिन्नं दुःखं परामृशतीत्याह भाष्यकारः, तेन दुःखेनेति । मुख्यमेव दुःखमिति भ्रमो माभूदत आह । जन्मनेति । अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्ते इत्युक्तं भवति ।

अभयमिति पुनः संसारभयाभावमाह । अभयं च ब्रह्मेति असकृदभयश्रुतेः । ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमत इत्याहुस्तान् प्रत्याह । अजरमिति । सर्वात्मना परिणाम एकदेशेन वा, पूर्वस्मिन् कल्पे सर्वात्मना ब्रह्मणोऽन्यथात्वादिना-प्रसङ्गः । एकदेशपरिणामे तु सावयवत्वेन घटादिवदनित्यत्वप्रसङ्ग इति सूक्तमजरमिति । वैनाशिकाः प्राहुः प्रदीपस्येव निर्वाणं मोक्षः तस्य चेतस इति, तान् प्रत्याह, अमृत्युपदमिति । एतदुपपादयिष्यते वार्त्तिककारः । तदेतद्भाष्यं वार्त्तिककारो व्याचष्टे । तेनेति । आत्यन्तिकग्रहणं महाप्रलयावस्थानिवृत्त्यर्थम् । अत्र भाष्यम् , नित्यं सुखमात्मन इत्यादि । तस्यार्थः, विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभावं सुखं, तथा च ब्रह्मणो नित्यत्वात् तदपि नित्यमित्यर्थः । आत्मन इति षष्ठी राहोः शिर इतिवन्मन्तव्या । तदेतद्भाष्यं व्याचष्टे । आत्यन्तिकीति । तेषामित्यादि भाष्यं व्याचष्टे । तन्नेति । अत्रानुमानमुपन्यस्यातिप्रसङ्गेन निराकरोति । नेति । अथात्मनि दुःखमेकं नित्यं नेच्छति, तत्राह, अनैकान्तिकता वा । ( ८५ । २ ) नित्यस्याभिव्यक्तिरित्यादिभाष्यं व्याचष्टे । नित्यमिति । अयमभिसन्धिः, सुखं तावदात्मनो गुणो नात्मा, उपपादितो हि गुणगुणिनोर्भेदः, एवं विज्ञानमप्यात्मगुणः, न ह्युदयव्ययवतीभ्यो ज्ञानव्यक्तिभ्योऽनुदयव्ययधर्मा भवितुमर्हत्यभिन्न आत्मा । न चात्मैव ज्ञानस्वभावः तत्तद्विषयोपधानेनोदयव्ययधर्मेव भविष्यतीति साम्प्रतम्, घटमहं जानामीति मानस्यां बुद्धौ त्रयाणामपि ज्ञानज्ञेयज्ञातॄणां भेदेनानुव्यवसायात् । विषयतज्ज्ञानभेदेऽपि च ज्ञातुरेकत्वेन प्रतिसन्धीयमानत्वात्, न चैतदसति बाधके भेदज्ञानं भ्रान्तमिति युक्तम्,

न चागन्तुकज्ञानातिरिक्ते स्वाभाविकमात्मनि चैतन्यमनुभूयते, न चात्मैव तत्स्वभावः, सुषुप्तत्वानुपपत्तेः, अचेतयमेव हि सुषुप्त इत्युच्यते, न च तदा विषयशून्यं स्वानिष्ठमात्मचैतन्यमिति युक्तं, तदवस्थाभेदस्य सुप्तोत्थितेन स्वप्नान्तिकस्येव स्मरणप्रसङ्गात् , सुखं च न ज्ञानजातीयमित्युपपादितं प्रत्यक्षसूत्रे, न च किञ्चिदपि स्वयंप्रकाशमिति चतुर्थे निवेदयिष्यते, तदेवं व्यवस्थिते दूषणं भाष्यवार्त्तिकोक्तं द्रष्टव्यम् । यथाऽयमात्ममनःसंयोग इति । संसारावस्थायां तावदयमात्ममनःसंयोगो धर्मनिमित्तमपेक्षमाणः सुखज्ञानमकार्षीत् , यदि तु मुक्त्यवस्थायां तदनपेक्ष एव सुखज्ञानं करोति, हन्त रूपादिज्ञानेषु इन्द्रियान्तराण्यपि नापेक्षेतेति भावः । शङ्कते । योगजेति । न वयं विषयमात्रापेक्षां ब्रूमो येन रूपादिष्वपि ज्ञानमुत्पादयेदपि तु संसारावस्थायां यत्सुखज्ञानायानेनापेक्षितं तदपेक्ष्यते, धर्मश्च तदा तेनापेक्षित इति मुक्त्यवस्थायामपि धर्ममेवापेक्षते, एतावान् विशेषो यदयं योगज इति, तथा च न रूपादिज्ञानप्रसङ्ग इति । शङ्कते । नित्योऽस्याविति । निराकरोति । योगेति । ननु स्वन्मते यथा सुखसंवेदनं जिहासितमेवमस्मन्मतेऽपि सुखसंवेदनहानाय घटिष्यत इत्यत आह । न चायं सुखमिति । अस्मन्मते हि दुःखहानायैव तदनुषक्तं सुखं जिहासितं, नित्यं तु सुखं सर्वदुःखविनिर्मुक्तं सत् दुःखहानाय जिहासितं भवतीत्यर्थः । न केवलमानुकूल्यात्प्रतिबन्धकत्वं नास्ति शरीरादीनां प्रत्युत मुक्त्यवस्थायामपि कल्पनीयतेत्याह । नित्यं शरीरादीति । (८६ । ४) सिद्धान्तिनो वचनमनुभाष्य देशयति(१) । प्रमाणाभावादित्युक्तं तच्च नेति । शास्त्रेण हि मोक्षसाधने

(१) चोदयतीति पुस्तकत्रये पाठः ।

लोकः प्रवर्त्तनीयः, अप्रवर्त्तमानश्च प्रवर्त्तनीयः, इष्टार्थी च प्रवर्त्तते तत्साधने, सुखं चेष्टमिति सुखात्मको मोक्ष इत्यर्थः । सेयं लोकप्रवृत्तिरनैकान्तिकत्वेन संशयहेतुरिति परिहरति । न प्रवृत्तीति । स्यादेतत्, मुख्यासम्भवेन गौणमाश्रीयते, सुखशब्दश्च सुखे मुख्यो भाक्तस्तु दुःखनिवृत्तौ, तस्मान्नित्यानन्द एव मोक्ष इत्यत आह । यदि पुनरिति । सञ्ज्ञाणकः सङ्ख्यानप्रवृत्तो योगी । धर्माधर्मौ तावदात्मनि परमार्थिकौ, न त्वविद्याकल्पितौ, तौ च वीतरागेणासक्तेन सता शक्यौ भोगेन क्षेतुम्, स हि सक्तस्तेषु तेषु विषयेषु उपात्तमुपात्तं भुञ्जानस्त्यक्तं त्यक्तं चोपाददानः संसारान्न मुच्यते, तस्मादयं रागो बन्धनमिति समाज्ञातस्तन्निबन्धना च प्रवृत्तिः परिहर्त्तव्या, अन्यथा तु नित्यसुखावधारणजनितेयं तृष्णापिशाची लब्धप्रसरा विषयसुखेष्वपि प्रत्यासन्नेषु पुरुषं प्रवर्त्तयन्ती मोक्षमस्य सुदूरं प्रतिक्षिपेदिति मनागपि प्रसरोऽस्या न दातव्यः, तस्मान्नित्यानन्दप्रतिपादकश्रुतिरात्यन्तिके दुःखवियोगे भाक्तीति युक्तमिति भावः । चोदयति । यद्यपीति । रागवद् द्वेषस्यापि प्रसरो न दातव्यः, तस्य च त्वया प्रसरो दत्त इति तुल्यो दोष इति । परिहरति । नाप्रतिकूलत्वात् । यथा नित्यसुखोपादानं मोक्षप्रतिकूलतया सक्त्या प्रतिकूलं, नैवमात्यन्तिकदुःखहानं द्वेषानुषक्तं, द्वेषः क्रोधो मन्युरित्यनर्थान्तरम्, ज्वलनात्मको हि स भवति, नैवं वैराग्यमलंप्रत्ययो हि स इत्यप्रतिकूलं दुःखहानमित्यर्थः । तदनेन नित्यं सुखमात्मनो व्यज्यते मोक्ष इत्यादि तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवतीत्येतदन्तं भाष्यजातं व्याख्यातं बोद्धव्यम् । यद्येवमित्यादेर्भाष्यस्यायमर्थः, एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रमुक्तस्य य-

दि नित्यं सुखं भवति, कामं भवतु मा भूदुभयोरपि पक्षयोर्वीतरागप्रवृत्तौ न मोक्षाधिगमो विकल्पते न सन्दिग्धो भवतीत्यर्थः। वैनाशिकानां मोक्षमुपन्यस्यति। चित्तं मुच्यत इति। (८७। ३) संसारी हि मुच्यते, रागादयस्तद्धेतवः, न चात्मनि नित्ये रागादयः संसारं कर्त्तुमुत्सहन्ते, नित्यस्याविकार्य्यत्वेन तादवस्थ्यादुपनेयाऽपनेयाभावात्। यथाऽऽहुः,

"वर्षातपाभ्यां किं व्योम्नश्चर्म्मण्यस्ति तयोः फलम्।
चर्म्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः।"

चित्तं तु कार्य्यं रागादिवशात्संसारी, तद्वियोगाच्च मुच्यते इति युक्तमित्यर्थः। देवमनुष्यादिजातिर्गतिस्तत्रोत्पत्तिः। तदेतदुद्दूषयति। नायत्नत इति। क्षणिकत्वाच्चित्तस्य जन्म विनाशप्रयोजनमेव, जन्मानन्तरमेव विनाश इति क्षणस्याभेद्यत्वेनोपनेयापनेयाभावात् स्वरसभङ्गित्वाच्च वैयर्थ्यमित्यर्थः। शङ्कते। सन्ततेरिति। अनादिः खलु कार्य्यकारणप्रवाहरूपा बुद्धीनां सन्ततिः, स चात्मसाक्षात्कारोन्मूलितवासनक्लेशजालस्य निवर्त्तते, निवृत्तिश्चेयमेव तस्या यत्तत्सन्तानवर्त्तिनश्चेतसोऽनागतस्यानुत्पाद इति भावः। निराकरोति। न तस्याशक्यत्वात्। उत्पन्नस्यानुत्पादो न शक्यः, नापि सन्ताननिवृत्तिः शक्या कर्त्तुमन्त्यक्षणानुपपत्तेः। स ह्यन्त्यक्षणः किञ्चिदारभते न वा, आरम्भे नान्त्य इति न कार्यकारणप्रवाहनिवृत्तिः, प्रवाहश्च सन्तान इति न सन्ताननिवृत्तिः। अनारम्भे तस्यासामर्थ्येनासत्त्वात्ततः पूर्वे सर्व एव क्षणा असन्तः स्युरिति कस्योच्छेद इति भावः। शङ्कते। अनागतानुत्पाद इति। तथा सत्यनागतानुत्पादलक्षणार्थक्रियाकारित्वादन्त्यक्षणोपपत्तिरिति भावः। निराकरोति। अनागतेति। प्रागभावस्या-

नादित्वादिति भावः । पृच्छति । तर्हि कस्येति । नित्यस्यानुप-
कार्यत्वादुपनयापनेयाभाव इति भावः । उत्तरम् । य इति ।
यथा चाक्षणिकस्यैवोपकार्यत्वं तथा क्षणभङ्गभङ्ग उपपादयिष्यत
इति सिद्धम् ॥ २२ ॥

॥ इति प्रमेयलक्षणप्रकरणम् ॥

संशयलक्षणावतारपरं भाष्यम्, स्थानवत एतर्हीति ।
तस्यार्थः, स्थानं क्रमः, तद्वतः एतर्हि इदानीमिति । क्वचित्पा-
ठः स्थानवत एव तर्हीति, तर्हि तदानीमुद्देशसमये क्रमवतः
संशयस्य प्रमेयानन्तरमुद्दिष्टस्य प्रमेयलक्षणानन्तरं स्थानं क्रमो
लक्षणस्येत्यर्थः । तदेतद्वार्त्तिककारो व्याचष्टे । प्रमेयेति । एव-
देव स्फुटयति । येति । स्थानं क्रमग्रहणेन व्याख्यातं, मत्वर्थश्च
प्राप्तिग्रहणेन ।

समा–यः (सू.२३) ॥ अत्र च विमर्शः संशय इति संश-
यसामान्यलक्षणम् । तत्र च संशय इति लक्ष्यनिर्देशो विमर्श
इति लक्षणपदम् । एकस्मिन् धर्मिणि विरोधिनानार्थविमर्शो वि-
मर्शः किंस्विदिति ज्ञानम् । तदनेनासमानजातीयेभ्यः प्रमाणा-
दिभ्यः समानजातीयेभ्यश्च विपर्ययादिभ्यः संशयो निवर्त्तितो
भवति । समानेत्यादीनि तु त्रीणि विशेषलक्षणानि । तेषु वि-
मर्शः संशय इत्यनुवर्त्तनीयम् । अत्र विशिष्टोऽवमर्शः, वि-
शिष्टः संशयो लक्ष्यपदं, समानधर्मोपपत्तेरनेकधर्मोपप-
त्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणा-
नीति । तदेतदाह वार्त्तिककारः । तत्र समानेति । त्रिविध-
एवेति ये पञ्चविधमाचक्षते ते निराकृताः । तदनवधारणं
ज्ञानं संशय इति संशयसामान्यलक्षणपरं भाष्यं व्याचष्टे ।
तत्र विषयस्वरूपेति । प्रत्ययोऽनवधारणात्मकश्चेति ।

आक्षेपपरिहारौ प्रथमसूत्र एव व्याख्यातौ। प्रत्ययशब्दस्य निश्चयवचनत्वमभ्युपेत्य व्याख्यानं प्रतीयते इति, परमार्थतस्तु प्रत्ययशब्दो ज्ञानपर्य्यायः, ज्ञानत्वं तु सामान्यं संशयादिष्वप्यस्तीति न विरोध इति। समानधर्मोपपत्तेरिति व्याचष्टे। समानेति। ( ८८। ४ ) विकल्पयाक्षिपति। किं पुनरिति। कस्मादिति। मा कार्षीद् द्रव्ये संशयं गुण एव कस्मान्न करोतीति प्रश्नार्थः। समाधत्ते। न साधारणेति। यादृशं सङ्ख्यापरिमाणप्रचयभेदयोनि परिमाणं स्थाणुपुरुषयोस्तादृशमस्यापि पुरोवर्त्तिनो द्रव्यस्य परिमाणं, तस्मात्सदृशपरिमाणधर्मस्य धर्मिण उपपत्तिरित्यर्थः, महत्त्वदीर्घत्वसामान्यवद्धर्मयोगस्तु सन्नपि न संशयकारणम्, असादृश्ये तद्योगेऽपि संशयाभावादिति भावः। स्यादेतत्। उपपत्तिः सत्ता, न च सदृशो धर्मः सत्तामात्रेण संशये हेतुः, अपि तूपलब्धः, न चोपलब्धेर्वाचकमत्रास्ति पदमित्यत आह। तस्योपपत्तिरध्यवसाय इति। यद्यप्ययमुपपत्तिशब्दः सत्तावचनस्तत्परश्च, तथाऽपि पदान्तरसमभिव्याहारादवगम्यते सत्तामात्राभिधानेऽपि तदुपलब्धिर्विवक्षितेति। विषयविषयिणोरभेदविवक्षया सामानाधिकरण्यमुपपत्तिरुपलब्धिरिति। पृच्छति। कस्मादिति। अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इत्यर्थः। उत्तरम्। अनुक्तमपीति। विशेषापेक्ष इति विशेषस्यापेक्षोच्यते, अपेक्षाशब्दश्च यद्यपीच्छायां वर्तते, तथापीह जिघृक्षायां, वाक्यसामर्थ्यात्। न च सा संशयस्य हेतुः, तस्याः संशये सति भावात्। तस्माद्विशेषापेक्षया जिघृक्षालक्षणयेह विशेषयोः पुरोवर्तिनोस्तु सादृश्यात्स्मरणे सत्यग्रहणं लक्षणीयं, यथा गङ्गाशब्दस्तीरं स्वसम्बद्धमेव लक्षयति, न तु तीरमात्रम्, एवं बुभुत्स-

या स्मर्यमाणमेवागृह्यमाणं सम्बद्धम् ,न त्वगृह्यमाणमात्रम् । अनेनैवाभिप्रायेण वक्ष्यति भाष्यकारः, विशेषस्मृत्यपेक्ष इति । तस्माद्विशेषग्रहणप्रतिषेधात् सामान्यज्ञानमभ्यनुज्ञातं भवतीति भावः । परिहारान्तरमाह । अथ वेति । स्यादेतत् । उपपत्तिशब्दः सत्तावचनश्चोपलब्धिवचनश्च, तथा च विनिगमनायां को हेतुरित्यत आह । यः पुनरिति । ( ८९ । १ ) नन्वभावः प्रमाणालम्बन उक्तस्तत्कथं न विरोध इत्यत उक्तं स्वतन्त्रमिति । अथ वा सत्तावाचकोऽप्ययमुपपत्तिशब्दः स्वाभिधेयविषयामुपलब्धिं लक्षयतीत्याह । विषयशब्देनेति । न चेयमलौकिकी लक्षणेत्याह । लौकिकमिति । यथा धूमो न सत्तामात्रेण हेतुस्तथोक्तं प्रागिति ।

एकदेशिनामुपसङ्ख्यानमुपन्यस्यति । अव्यवच्छेदेति । ते हि मन्यन्ते व्यवच्छेदहेतुरपि धर्मः समानो भवति, यथा कृतकत्वं साध्यधर्मिणि शब्दे दृष्टान्तधर्मिणि च घटादौ समानमिति, न चासौ नित्यत्वसंशयहेतुरपि त्वनित्यत्वस्यायोगं साध्यधर्मिणि व्यवच्छिनत्ति, तस्मादव्यवच्छेदहेतोरिति वक्तव्यमित्यर्थः । तदेतद् वक्तव्यं दूषयति । न समानेति । समानो हि धर्मः प्रतिसम्बन्धिनमपेक्षते केनेति, संशयपदेन च स्वविषयोपस्थापकेन परस्परविरोधिनावुपस्थितौ, तेन ताभ्यां समान इति गम्यते । तेन विपक्षव्यावृत्तत्वे सति अन्यजातीयवृत्तिरेव गम्यते, न चैवं कृतकत्वं, तस्मान्न वक्तव्यमव्यवच्छेदहेतोरिति । समानशब्दार्थः सादृश्यं तत्र नास्तीत्यर्थः ।

अत्रैवोपलब्धीत्यादिपदद्वयं शङ्कापूर्वकं योजयति । सोऽयं साधारण इति । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इति । शिरःपाण्यादीनामुपलब्धिर्वक्रकोटरादेरनुपलब्धिः पुरुषस्य वा-

धकं प्रमाणं, तद्धि रूढवक्रकोटरादेरुपलब्धिः शिरःपाण्यादेरनुपलब्धिः पुरुषस्य बाधकं प्रमाणं, तद्धि पुरुष एवायमिति वा इदंतया व्यवतिष्ठते, इदंतानिषेधेन वा नायं पुरुष इत्यनिदंतया व्यवतिष्ठते, तदभावोऽव्यवस्था । तदनेन साधकबाधकप्रमाणाभावो दर्शितः । विशेषाकाङ्क्षायां चेति विशेषस्मृतिर्दर्शिता ।

विमर्षपूर्वकं समस्तामित्यवधारयति । किमिदमिति । (९० । १) तत्रैकपदपरिग्रहे दोषमाह । यदि समानेति । विशेषः शिरःपाण्यादिः, विशिष्यते ह्यनेन पुरुषः स्थाणोरिति । अनुपलब्धसामान्यस्यापि कचिदुपलब्ध्यनुपलब्ध्यव्यवस्थास्तीति । यथा सप्तमे रसे दशमे द्रव्ये, न हि तत्र साधकं बाधकं वाऽस्ति प्रमाणम्, न च संशयः । विशेषापेक्ष इत्येतावतीति । तद्यथा हस्तिनं दृष्ट्वा तत्सम्बन्धिनौ स्थूणाहस्तिपकौ स्मरति, न च तत्र सन्दिग्धे । द्विपदपरिग्रहे(१) दोषमाह । एवं समानेति । नौदोलाद्यारूढो हि गच्छन् विदूर आरोहपरिणाहवद्वस्तुदर्शने सत्यपि च साधकबाधकप्रमाणाभावे विशेषस्मृत्यभावान्नग इति वा नाग इति वा न सन्दिग्धे । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च पदद्वयेऽभिधीयमानेऽन्यतःस्मर्यमाणाद्विशेषात्तद्दशधर्मवति धर्मिण्यनुपलभ्यमाने संशयः स्यात्, अस्ति हि तदा विशेषस्मृतिः साधकबाधकप्रमाणाभावश्च, न खल्वनुपलभ्यमाने समानधर्मे धर्म्मिणि तद्गता वक्रकोटरादयो वा शिरःपाण्यादयो वा शक्यग्रहा इति । यदाऽयं द्रष्टेति । यदा खल्वयं द्रष्टा प्रतिपरुरङ्कुरोद्भेदपुलकिताभिर्मन्दमलयमारुतान्दोलनललितलास्यशालिनीभिः शाखाभिर्मधुमदमुदितमधुपमालागुञ्जित(२)वल्लकीवाद्यमनोहराभिर्मत्तपुंस्कोकिलकुलविपञ्च्यमानपञ्चमाभिरारब्धसङ्गीतकं सहकारतरुमालोक्या-

(१) एकाद्विपदपरिग्रहे—पाठः । (२) मधुपमालासिञ्जित—पाठः ।

थ विदूरवर्त्ती कुञ्जरसदृशधर्मवन्तमनुभवति, तदाऽस्यास्ति समानधर्मोपलब्धिरस्ति च करितरुरूपविशेषस्मृतिर्न तु साधकबाधकप्रमाणाभाव इति न संशेते । कतिपयव्यक्त्याश्रयत्वं सहकारित्वादेर्विशेषस्याल्पविषयत्वम्, आरोहपरिणाहादेस्तु बहुव्यापित्वं महाविषयत्वं, नानार्थाविमर्षणं(९१।१) च विरुद्धार्थाविमर्षणम्। तदनेन स्थाणुपुरुषयोरित्यादि भाष्यं व्याख्यातम् । पश्यन्नित्युपपत्तिविरणम्। विशेषं बुभुत्समान इति विशेषापेक्ष इत्यस्य विवरणम् । किंस्विदिति विमर्षविवरणम्। स्यादेतत् ।संशयोत्तरकाला बुभुत्सेति कथं बुभुत्समानः संशेत इत्यत उक्तं भाष्यकृता समानमनयोरिति । विशेषापेक्षाशब्देनेच्छावाचिनाऽगृह्यमाणविशेषस्मरणं लक्षितमिति भावः । सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिर्विनश्यद्वस्था विशेषस्मृत्या सहाविनश्यदवस्थयैकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम् । द्विपदपरिग्रहमनेकधर्मोपपत्तेर्विप्रतिपत्तेरित्यत्रापि योजयति । एनेनेति । ( ९१ । ३ ) द्वे द्वित्वे नैकीकृत्याद्यानन्तरयोरिति द्रष्टव्यम्(१) । अनेकधर्मोपपत्तेरित्यत्र भाष्यकृतो व्याख्यां ग्रहीतुमेकदेशिव्याख्यानमुपन्यस्य दूषयति । अनेकेति । शब्दो हि संयोगजः, संयोगजत्वं हि कार्ये द्रव्ये गुणे च रूपादौ शरीरादिक्रियायां चास्तीति द्रव्यगुणकर्मणां समानम्, तस्मादनेकस्य धर्मश्चरितार्थः । एवं शब्दगतोऽनेकोऽपि धर्मः समानतयैव द्रव्यत्वादिसन्देहहेतुः, त्रिपु संयोगजत्वं साधारणं, सत्त्वादिना निर्विभक्तस्य निर्गुणत्वं गुणकर्मणोः, एवं क्षणिकत्वं द्रव्यगुणकर्म्मणामिति समानधर्मोपपत्त्या गतार्थ-

---

( १ ) एकस्यैवानन्तरत्वात्कथमनन्तरयोरिति द्विवचनमित्यतो वार्त्तिकाशयं प्रकटीकरोति—द्वे अनन्तरे द्वित्वेनैकीकृत्य आद्यपक्षादनन्तरपक्षद्वयं अनन्तरयोरिति द्रष्टव्यम् ।

मित्यर्थः । पृच्छति । अथेति । भाष्यकृद्व्याख्ययोत्तरम् । असाधारण इति । पुनः पृच्छति । कथमिति । समासपदशब्देन तदेकदेशोऽनेकशब्दो लक्ष्यते, समासगतेनानेकशब्देनेत्यर्थः । उत्तरम् । समानेति । एतदुक्तं भवति, यतोऽनेकस्मात्समानासमानजातीयादेष स्वाश्रयं व्यावर्त्तयति, अतोऽनेकापादानकव्यावृत्तिहेतुत्वाल्लक्षणयाऽनेक इत्युच्यते । तदनेन समानजातीयमसमानजातीयं चानेकमिति भाष्यं तस्माद्विशेष इत्यध्याहृत्य व्याख्यातम् । अध्याहृतविशेषपदविवरणं विशेषको धर्म इति । सम्बन्धसामान्यविवक्षया षष्ठी तस्यानेकस्येति । लक्षणाबीजान्तरमाह । तस्य चानेकस्येति । निवर्त्यनिवर्त्तकसम्बन्धेनानेकशब्देन धर्मो लक्ष्यते इत्यर्थः । तदनेन विनैवाध्याहारं समानजातीयमसमानजातीयं चानेकं तस्य धर्मो निवर्त्तकतयेति व्याख्यातम् । न त्वत्र समासभ्रान्तिः कर्त्तव्या, दर्शयिष्यति हि बहुव्रीहिमिहैव वार्त्तिककारः । तदनेन लक्षणाबीजद्वयोपन्यासेनासाधारणो धर्म इति ग्रहणकवाक्यं व्याख्यातम् । प्रकारान्तरेणानेकधर्मपदं व्याचष्टे । एकानेकेति । एकं चानेकं च तदुभयमनेकं, तदेतस्यानेकस्य प्रत्ययहेतुर्धर्मोऽनेकधर्मः, भेदाभेदप्रत्ययहेतुरित्यर्थः । विभागजत्वं विभागजानां शब्दानामन्योन्यस्याभेदप्रत्ययहेतुः, तदितरेभ्यो भेदप्रत्ययहेतुरिति, तदिदमाह । यतो विभागजन्यत्वादेष प्रत्ययो भवतीदं विभागजं शब्दजातमेकम्, इदं च ततोऽन्यदनेकं भिन्नं, तत्र स एवैकप्रत्ययहेतुर्धर्मोऽभेदप्रत्ययहेतुः स एवानेकप्रत्ययहेतुर्धर्मोऽनेकधर्मो भेदप्रत्ययहेतुर्विशेषः । जात्यभिप्रायं चैकवचनम् । सदादिर्हि धर्मो द्रव्यगुणकर्मणामभेदप्रत्ययहेतुः सामान्यादिभ्यः शब्दं निर्विभजति । तदिदमाह । यतः सदादेरेष प्रत्य-

यो भवतीदमेकं यतश्च विभागजत्वादेष प्रत्ययो भवतीदमनेक-मिति, तस्मात्सिद्धमेकं चानेकमिति तत्प्रत्ययहेतुरुपचारेणानेक इति । तादिदमुन्नाप्यं व्याख्यातम् । अत्रोदाहरणमाह । यथेति । द्रव्यादिकोटित्रयविशेषे संशयप्रदर्शनार्थमुक्तं सामा-न्यविशेषसमवायेभ्य इति । सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः, तेनानेन सदा-दिना निर्विभक्तस्य पृथक्कृतस्येत्यर्थः ।

स्यादेतत् । यद्येन सहचरितं दृष्टं तत्क्वचिद्दृश्यमानं तत् स्मारयत्तद्विरुद्धेनापि सम्बन्धादनिश्चाययत्संशयहेतुर्भवति, यथा समानो धर्म्मः, असाधारणस्तु धर्मो विभागजत्वं नर्ते शब्दात् क्वचित्पृथिव्यादौ वा उत्क्षेपणादौ गन्धादौ वा दृष्ट इति कथं स्मारयेत्, अस्मारयन् वा कथं संशयं जनयेत् । तस्मात्कोऽयं भवेदियतो धर्मादिति जिज्ञासामात्रमुत्पादयेत्, न त्वयं वार्थं वेति संशयमित्यत आह । न हीति । कस्मान्न दृष्टमित्यत आह । सर्वत्रासम्भवात् । ( ९२ । ? ) न हि द्रव्यादे-र्विभागतो जन्म सम्भवति, तदन्वयव्यतिरेकाननुविधानादित्य-र्थः । नन्वत एवोक्तं न संशयहेतुरित्यत आह । विभागज-त्वं संशयं करोति सर्वतो व्यावृत्तेरिति । अयमर्थः । यद्यपि विभागजत्वं न द्रव्यादौ क्वचिद्दृष्टं, तथाऽपि तद्व्य-तिरेकः प्रत्येकं द्रव्यादौ दृष्ट इति विभागजत्वेन सदाद्यविशेष-वान् शब्दो द्रव्यकर्मभ्यां व्यावर्तमानः किं गुणः, गुणकर्मभ्यां वा व्यावर्तमानः किं द्रव्यं, गुणद्रव्याभ्यां व्यावर्तमानः किं कर्मेति व्यतिरेकमुखेन तत्तत् स्मारयन् असाधारणो धर्मो भवति संशयकारणमिति । देशयति । ननु चेति । अयमभि-सन्धिः । वंशे पाट्यमाने वंशदलयोः क्रिया, ततस्तयोर्मिथो

विभागः, ततो वंशदलावरुद्धनभोभागविभागः, सोऽयं विभागजो विभागो न वंशदलकर्म्मजः, अवयवक्रिया हि तदवरुद्धनभोभागविभागजनिका द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकत्वेन व्याप्ता विकसत्कमलकुड्मले दृष्टा। न हि तत्र मुकुलितादृिकासि कमलमन्यत्, आकुञ्चितप्रसारिताङ्गुलिकरतलवत्तत्त्वेन प्रत्यभिज्ञायमानत्वात्। वंशदलक्रियाऽपि चेत्तादृशी, नूनमनयाऽपि द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनिकया भवितव्यं, तथा च द्रव्यं कार्य्यमपि न नश्येत्, तस्मान्नानया वंशदलाकाशविभागो जनयितव्यः। न चान्यदस्य कारणं सम्भवति, तस्माद्वंशदलक्रियाजनितो दलयोर्विभागः कार्य्यैकार्थसमवेतः तदवरुद्धाकाशप्रदेशविभागस्यासमवायिकारणमेषितव्यः, एवं च गुणः शब्दो विभागजत्वाद् विभागजविभागवदिति विभागजत्वं गुणत्वनिश्चयहेतुरिति सिद्धं भवति। परिहरति। अनभ्युपगतविभागजविभागस्य एतद्विभागजत्वमेवं संशयकारणं भवति। अनभ्युपगमबीजं च कुतः पुनरेतदेवमवगतं पद्मपत्रावयवक्रिया न विभागद्वयजनिकेति। विभागद्वयक्रमकल्पनायां प्रमाणाभावादिति चेद् हन्त वंशदलयोरपि तुल्यम्। ननूक्तं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकं स्यात् कर्म ततश्च द्रव्यनाशो न स्यादिति। अथ विपर्य्ययः कस्मान्न भवतीति, वंशदलद्वयक्रियैव विभागद्वयजनिका, पद्मपत्रावयवक्रिया त्ववयवविभागजनिका तदवयवाकाशविभागस्त्ववयवविभागजन्मा, यदि च पद्मपत्रावयवक्रिया उभयजनिका भवेद् वंशदलक्रियेव द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागं जनयेदिति। न चान्यतरत्र विभागविषययौगपद्यनिश्चयः क्रमप्रमाणाभावश्च तुल्यः, तस्मात्पद्मपत्रावयवक्रियाया विभागद्वयजनकत्वसन्देहाद्-

न्वयनिश्चयो व्याप्यव्यापकभावः । क्रियावैलक्षण्यात्तु स्वहेतुवैलक्षण्यजन्मनः कार्यस्य विभागस्य वैलक्षण्यं स्यात् । यदेका द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी, अप्रतिद्वन्द्वी चेतरः, त्वयापि चैतद्वैलक्षण्यं क्रियाया अभ्युपगन्तव्यं, यदेका विभागमेकं जनयति, अन्या तु विभागद्वयमिति । तस्मादेतदुदाहरणबलेन न विभागजविभागसिद्धिः । यस्त्वङ्गुलिकर्मानन्तरमङ्गुलितरुविभागो हस्ततरुविभागः शरीरतरुविभागश्च दृश्यते तत्राङ्गुलितरुविभागमङ्गुल्याश्रया क्रिया करोतु, हस्ततरुविभागन्तु न शक्ता जनयितुम्, तस्याः स्वाश्रयासमवायात्, स्वाश्रयसमवेतकार्यजनने च क्रियायाः सामर्थ्यावधारणात्, तस्माद्धस्तादितरुविभागः क्रियातोऽसम्भवन्नङ्गुलितरुविभागमेव कार्यैकार्थसमवायलक्षणप्रत्यासत्त्या निमित्तीकरोतीति विभागजविभागसिद्धिं मन्यते, तं प्रत्याह । यः पुनरिति । अस्तु वा विभागजो विभागः, तथाऽपि विभागजत्वमीदृशमसाधारणमेवेत्याह । अस्तु वेति । अस्तु तस्याभ्युपगतविभागजविभागस्यापि विभागजत्वमसाधारणं विशिष्टम्, तदेव दर्शयति । विभागजेति । पाट्यमाने हि वंशे शब्दोत्पत्तौ वंशदलयोर्विभागो निमित्तकारणं, वंशदलावरुद्धाकाशविभागस्त्वस्यासमवायिकारणं, न तु भेर्याकाशसंयोगवद् वंशदलाकाशसंयोगोऽसमवायिकारणं भवितुमर्हति । तथा हि प्रयोगः, योऽयं वंशदलविभागनिमित्तः शब्दः स निमित्तसमानजातीयासमवायिकारणजन्यः, तदसाधारणनिमित्तजन्यशब्दत्वात्, यो यः शब्दो यदसाधारणनिमित्तजन्मा स सर्वस्तज्जातीयासमवायिकारणजन्यः, यथा भेरीदण्डसंयोगनिमित्तः शब्दो भेर्याकाशसंयोगासमवायिकारणकः, तथा चायं, तस्मात्तथा । तदेवं वंशदलविभागलब्धजन्मना वंशदलाकाशविभागेनासमवा-

यिकारणेन जनितः शब्दः। तदेवं विभागजविभागासमवायि-कारणकत्वं शब्दस्य। तदपि यद्यप्यङ्गुल्याकाशविभागजहस्ता-काशविभागासमवायिकारणे कायाकाशविभागेऽस्ति, तथाऽपि कारणमात्रविभागजविभागासमवायिकारणकत्वादिति हेतुर्भाष्य-कारेण विभागजत्वादित्यनेन सूचितः। न चाङ्गुल्याकाश-विभागपूर्वकः कायाकाशविभाग एवं, स हि कारणाकारण-विभागपूर्वको न तु कारणमात्रविभागपूर्वकः, तदिदमुक्तं विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति। ननु सहचरितो दृष्टः स्मारयन् विशेषसंशयहेतु-र्भवति, न तु यो व्यावृत्तः, तेनासाहचर्य्यादिति शङ्कामपनेतुं भाष्यकारीयमुत्तरमाह। तुल्यजातीयेष्विति। यद्यपि व्यति-रेकमुखेनासाधारणः शक्तः स्मारयितुं, तथाऽपि भाष्योक्तम-प्युक्तं, यत्खलु सदादिरूपसम्पन्नं विशेषवत्तत्समानजातीये-भ्योऽसमानजातीयेभ्यश्च व्यावृत्तं, यथा पृथिवीद्रव्यम् अवा-दिभ्यश्च द्रव्यान्तरेभ्यो गुणकर्म्मभ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तं द्रव्यजातीयमेवं रूपत्वेन रूपं गुणः उत्क्षेपणत्वेनोत्क्षे-पणं कर्म, तथाविधः शब्दः सदादिरूपसम्पन्नो विभाजत्वेन समानासमानजातीयेभ्यो विशिष्यते, तस्माद्भवति द्रव्यं गुणः कर्म्म वेति संशय इति। पूर्वव्याख्यानतोऽनेकशब्देनासाधार-णो धर्मो लक्ष्यत इत्युक्तं, सम्प्रति समानशब्दपर्य्यालोचनया-ऽप्यनेकशब्दोऽसाधारणे वर्त्तते लक्षणयैवेत्याह। समानधर्मस्य संशयकारणत्वेनोपयोगाच्चेति। समानं हि प्रतियोगितया-ऽसमानं बुद्धौ सन्निधापयति, तत्र द्वयस्यापि समानशब्देन श्रुत्यर्थाभ्यामुपात्तस्य समानधर्मस्यासमानस्य च समानस्य संश-यकारणत्वेनोपयोगादिति योजना। पृच्छति। कस्मादिति।

असमदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इति भावः। उत्तरम् । नैवमिति । असाधारणो हि धर्मो व्यतिरेकमुखेन संशयहेतुः, स चानेकस्माद्व्यावृत्त्या सिध्यति, सा च लाक्षणिकानेकपदाधीना नासमानपदाल्लभ्यत इति प्रयोजनवल्लाक्षणिकपदोपादानम् । लक्षणैव चेयमनेकस्माद्व्यावृत्तोऽनेकधर्म इति विग्रहेण निर्वर्ण्यत इति । अभ्युच्चयमात्रमाह । लाघवं चेति । असाधारणस्य संशयकारणत्वे व्यावृत्तिः प्रयोजिकेति मन्वानश्चोदयति । यद्यनेकेति । परिहरति । नैष दोष इति । व्यभिचाराव्यभिचारौ हि संशयनिर्णययोः प्रयोजकौ नान्वयव्यतिरेकमात्रमित्यर्थः । चोदयति । यदि तर्हीति । (९३ । १) सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः, स चेत्संशयस्य कारणं, हन्त समानधर्मोपपत्तिरेव सर्वत्र संशयकारणमिति कृतमनेकग्रहणेनेत्यर्थः । परिहरति । सत्यमिति । सत्यं सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः, स च संशयस्य प्रयोजकः, तथाऽप्येकस्यान्वयः साधारणोऽपरस्य व्यतिरेक इत्येतावतोभयोपादानमित्यर्थः ।

एवमनेकधर्मोपपत्तेरिति स्वमतेन व्याख्याय परमतव्याख्यानं दूषयितुमुपन्यस्यति । नञ इति । नित्यः शब्दः श्रावणत्वात् शब्दत्ववदित्येकः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुः, अनित्यः शब्दः कृतकत्वाद् घटवदित्यपरः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुरिति । तद्दूषयति । तदयुक्तमिति । न ह्यव्यभिचारिणौ पञ्चरूपोपपन्नावित्यर्थः। न चायं प्रतिवादिनः प्रयोगोऽपि युक्तः। विरुद्धशब्दस्यार्थो विरुद्धार्थः स्वरूपमनयोर्विरुद्धं (९४ । ३) परस्पराभाववदित्यर्थः । विशेषादर्शनादुपजात इति । (९४ । ६) संशयस्य हि विशेषादर्शनं जनकं,

विशेषदर्शनं च निवर्तकमिति, स चेत् त्वन्मते निवर्तकादुत्पद्येताऽव्यभिचारिहेतुजनिताद्विशेषदर्शनान्नास्य निवृत्तिः स्यादित्यर्थः। न च यदा निवर्तकमस्यास्ति, तदा जनकमपीत्याह। **न हि विशेषदर्शने सतीति।**

स्यादेतत्। प्रत्यक्षमेव स एवायं गकार इत्याकारं प्रत्यभिज्ञासमाज्ञातं शब्दस्य स्थेमानमाकलयेत्।

'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति।'

इति नित्यत्वं परिच्छेत्स्यतीत्यत आह। **नायमर्थः प्रत्यक्षस्य विषयः।** तदेव हि प्रत्यक्षं संशयस्य निवर्तकं यदनन्यथासिद्धं, यथौष्ण्यग्राहि वह्नेः। इदं तु सादृश्येनापि सम्भवात्स्वयं सन्दिग्धं सन्न संशयोच्छेदायालमित्यर्थः। मा भूत्प्रत्यक्षस्य विषयो भवति त्वागमस्य, नो खलु क्षणिकः शब्दोऽर्थप्रत्यायने समर्थः, तस्यान्वयव्यतिरेककालानवस्थायिनोऽशक्यसमयत्वेनार्थप्रतिपत्ते(१)रनुपपत्तेः। तस्माद्यद्यपि साक्षान्नित्योऽयमित्यागमो नाभिधत्ते, तथाऽपि विदितसङ्केतेरर्थप्रत्ययं कुर्वन्नात्मनो नित्यतामाक्षिपन्नित्यताविषयो भवति, यथा ऽऽहुः "नित्यस्तु स्याद्दर्शनस्य परार्थत्वा"दित्यत आह। **नागमविषयः।** यद्यपि वर्णव्यक्तयः क्षणिकाः, तथाऽपि स्वस्वसामान्यविशेषगत्वाद्युपहिता गवादिव्यक्तय इव गोत्वाद्युपधानाः शक्यसङ्केता इति न नित्यतामाक्षिपत्यागम इत्यर्थः। **भवतु किं नो बाध्यत इति।** न खलु चन्द्रमसः परभागे हरिणसद्भावसन्देहः शक्यः कदाचिदप्युच्छेत्तुमस्मदादीनामित्यर्थः। **कथं न बाध्यत**

---

( १ ) अर्थप्रतिपत्तेरिति पु० नास्ति।

इति । सन्दिग्धनित्यानित्यभावे शब्दे कृतकत्वं दृष्टमिति नानित्यत्वेन स्वभावतः प्रतिबद्धं, तथा च न बुद्ध्यादीनामनित्यत्वं साधयितुमर्हतीत्यर्थः । सर्वमिति । कृतकत्वमयत्ननान्तरीयकत्वप्रत्ययभेदभेदित्वादीत्यर्थः । सर्वं चानुमानमिति । यदि च पञ्चरूपोऽपि हेतुः संशयकारणं सर्वमनुमानमेवमिति सर्वमप्रमाणं स्यादित्यर्थः । वैनाशिकः प्राहुः । नित्यासम्भवादिति । न बाधापरिज्ञानादिति । बाधविषयापरिज्ञानादित्यर्थः । स्वदेशे परोत्पत्तिप्रातिबन्धकत्वं सप्रतिघत्वं, ( ९५ । ३ ) (१)सौत्रान्तिकमते हि रूपं सप्रतिघमिष्यते मूर्तं च । नित्य एवेति अनित्य एवेति वाऽभिलापो नोपपद्यते, स्थाणुरेवेति वा पुरुष एवेति वाऽभिलापः । चोदयति । नैवं भविष्यतीति । मा भूदभिलाप इत्यर्थः । परिहरति । व्याहतमिति । स एवैकग्रन्थेनाह । ननु चेति । तदेवं पञ्चरूपोपपन्नयोर्हेत्वोरेकत्र समावेशाभाव उक्तः । यदि पुनरसत्प्रतिपक्षत्वरूपरहितयोरेकत्र सम्भवोऽङ्गीक्रियते, तथा च संशयहेतुत्वमित्यभिप्रायेण शङ्कते । अथ कृतकत्वेति । निराकरोति । तथाऽपीति । प्रत्येकं सत्प्रतिपक्षत्वं मिलितयोस्त्वसाधारणत्वं, तादृशोऽन्यत्रादर्शनादित्यर्थः । तत्किमिदानीं सत्प्रतिपक्षतया कृतकत्वमसाधनमेव शब्दानित्यत्वे, तथा च बहु व्याहतं स्यादित्याशयवान् पृच्छति । यदा पुनरेवम्भूताविति । उत्तरम् । तदा तयोरिति । ननु कृतकत्वस्य साध्यत्वात् श्रावणत्वस्य च सिद्धत्वात् प्रथमभाविना नित्यानुमानेन सिद्धाङ्ककेनापहृतविषयं चरमभाविसाध्याङ्ककमनित्यानुमानमेव बाध्यतामित्यत आह ।

---

(१) सप्रतिबन्धम् पा० पु० पा० ।

यत्नश्च क्रियमाण इति। सिद्धमपि श्रावणत्वमनुनासिकत्वाद्यनित्यधर्मसाधारणतया सव्यभिचारं सन्नित्यत्वस्य साधनं न भवितुमर्हतीति। कृतकत्वस्य तु पाक्षरूप्यं नित्यस्य च प्रमाणबाधनमुपपादयिष्यत इत्यर्थः।

विप्रतिपत्तेरित्यस्य व्याख्यानम्, विप्रतिपत्तेरिति। (९६। ३) यद्यपि विरुद्धा प्रतिपत्तिर्ज्ञानं विप्रतिपत्तिः, तथाऽपि तस्या वादिप्रतिवादिगताया अत्यन्तपरोक्षत्वात्संशयकारणत्वानुपपत्तेः स्वकार्य्यं प्रवादं लक्षयतीत्यर्थः। अत्र भाष्यकार उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वं मत्वा समानधर्म्मोपपत्तेरित्यनेन गतार्थतां परिहरन्नाह स्म, पूर्वः समानोऽनेकश्चेत्यादि। तदुपन्यस्य वार्तिककारो दूषयति। तत्रेति। नो खलु समानानेकधर्म्मोपलब्धौ सत्यां सत्यां च विशेषस्मृतौ साधकबाधकप्रमाणसद्भावे संशयो भवतीत्युक्तं, तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्थे पृथक् संशयकारणे इति। विशेषमपि दूषयति। समान इति। ननु यदि नास्ति भेदः, तत्किमिदानीं सर्वेषां ज्ञातृस्थत्वाविशेषेण त्रयाणामपि संशयकारणानां समानानेक(१)विप्रतिपत्तीनामभेदस्तथा च पृथगुपादानवैयर्थ्यमित्यत आह। समानानानेकधर्मयोरिति। पुनश्चोदयति। समानधर्मः सर्व एवायमिति। अयमभिसन्धिः, असाधारणो ह्यदृष्टपूर्वः क्वचिदपि न संशयं कर्त्तुमुत्सहते, यत्पुनरसाधारणत्वं संशयहेतुत्वेनोपवर्णितं भाष्यकृता, तत्समानमेव, न त्वसाधारणम्, यथाऽऽहुः,

---

(१) समानानेकधर्मेति पा०।

यथाऽन्यत्र वैशेषिकतन्त्रे इति । न नियमार्थे पदे इत्युपल-
क्षणं, न प्रमाणतर्कसाधनोपालम्भपदलभ्योऽभिप्रायनियम
इत्यपि द्रष्टव्यम् । पक्षान्तरमाह । अथ वेति । यथा गोभिर्युक्तो
रथो गोरथ इति युक्तपदलोप इति । न नियमार्थयोरित्येतद-
प्युपलक्षणं पूर्ववदेव । इह वादलक्षणं पठता भाष्यकारेण नियमो-
ऽप्यतिदिष्ट इति मन्वानश्चोदयति । भाष्यमिदानीमिति । परि-
हरति । न सूत्रेति । जल्पलक्षणानुकूलो यः पाठक्रमः यतोऽर्थ-
स्वरूपमात्रं प्रतीयते, न त्वार्थोऽर्थ इत्यर्थः । यदुपपन्नम् उक्त-
मात्रमित्यर्थः । तत्र भाष्यकारेण च्छलादीनां निषेधार्थतया सा-
धनाङ्गभावमाक्षिप्य परपक्षविघातेन स्वपक्षरक्षणादङ्गभाव इति
दर्शितं, तदेतद्वार्त्तिककार आक्षिपति । छलजातिनिग्रहस्थानै-
रिति । तत् किं निग्रहस्थानान्यप्ययुक्तानि, न चैतच्छक्यमित्यत
आह । छलं तावदिति । छलजात्योराक्षिप्तयोः सम्पातायातानि
निग्रहस्थानानीत्यभिप्रायः । भाष्योक्तं समाधिमाशङ्कते । अङ्ग-
भाव इति । (१६२।१) निराकरोति । एतदपीति । न हि सह-
स्रेणाप्यन्धैः पाटच्चरेभ्यो गृहं रक्ष्यत इत्यर्थः। एवमाक्षिप्ते पार्श्वस्थः
पृच्छति । किमर्थं तर्हीति । सिद्धान्तिन उत्तरं साधनेति । वादे
तावद्यद्यपि न साधनविघातसमर्थानि तथाऽपि तेषां तत्त्वमविद्वान्
एभिरस्य साधनं विहनिष्यामीत्यनया बुद्ध्याऽपहृतो व्यामोहितः
तस्माद्वादे भ्रमेणोपादानमेषामित्यर्थः । यत्र त्वेषां तत्त्वं विद्वान्
प्रवर्तते न स वादः, किं तु जल्पः वितण्डा वेत्याह । यत्र
चैतानीति । ननु जल्पवितण्डयोः प्रयोगात् साधनमङ्गं वा
स्यादत आह । न पुनरिति । ननु न यदि साधनमङ्गं वा कस्मा-
त्तर्हि जल्पवितण्डयोरेषां प्रयोग इत्यत आह । साधुसाधनोपा-
दाने वेति । साधुसाधनोपादाने वादिना कृते परेण प्रतिवादिना

जिगीषुणाऽऽकुलितबुद्धिः द्राक् पारमार्थिकमुत्तरमप्रतिपद्यमानः छलादीनि प्रयुङ्क्ते। किमर्थमित्यत आह। कदाचिदिति। यथा-कथं चित्प्रयोगेण। तदनेन प्रकारेण तत्त्वसंरक्षणार्थत्वात् जल्पे सदाचारो न च शास्त्रकाराणां छलाद्युत्पादनमसदृशं, न च घटपटाद्यभिधानप्रसङ्गः, वाग्युद्धे तेषामप्रसक्तादिति। न बाधेति। नैकेनापरं तदैवापोद्यत इत्यर्थः। शेषं सुगमम् ॥२॥

उद्देशक्रमानुरोधेन जल्पानन्तरं वितण्डालक्षणमाह।

स-ण्डा (सू० ३) ॥ पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीय एव पक्षः प्रतिपक्षः, तस्य स्थापना साधनं यत्तया हीनः, तदनेन जल्पाद् व्यवच्छिनत्ति। तदेतदाह भाष्यकारः, स जल्प इति। तयोरेकतरं प्रतिवादी आत्मीयं पक्षं न स्थापयतीति। परपक्षप्रतिषेधेनेति। तत्स्थापनाप्रतिषेधेनेत्यर्थः।

स्यादेतत्। यथा प्रतिवादिनः पक्षो वादिपक्षापेक्षया प्रतिपक्ष एवं वादिपक्षोऽपि प्रतिवादिपक्षापेक्षया प्रतिपक्ष इत्युभयपक्षस्थापनाहीना वितण्डेति स्यादत आह वार्त्तिककारः। प्रतिपक्षस्थापनाहीन इति। प्रथमपक्षवादिनो हि स्थापनाया अभावे किं वैतण्डिक आहेति न च पक्षः शक्य आहन्तुं, तस्मात्प्रथमपक्षवादिनोऽस्त्ति स्थापनेति द्वितीय एव पक्षः स्थापनाहीन इति सामर्थ्यादुक्तमिति।

अत्र चोद्यभाष्यम्—अस्तु तर्हीति। स्थापनाया अभावे स्थाप्यः पक्षो नास्ति, न ह्यन्यथा पक्षस्य पक्षत्वमिति भावः। परिहरति। यद्वै खलु तदिति। वैतण्डिकोऽपि हि वादी पारिशेष्यान्मत्पक्षः सेत्स्यतीति बुद्ध्या स्वपक्षमस्थापयन् परपक्षस्थापनामाहन्ति, तस्मात्परपक्षप्रतिषेधलक्षणं वाक्यमस्य पक्षः परपक्षनिषेधेन पारिशेष्यात् पक्षसिद्धिहेतुत्वादुपचारतः। तस्मादस्ति वैतण्डिकस्य पक्षो न तु परपक्षप्रतिषेधादन्या स्थापना,

तेनास्य पक्षोऽस्ति, नास्ति तु पक्षस्थापना, तदिदमुक्तं न कञ्चि-दर्थं प्रतिज्ञाय स्थापयतीति। पक्षत्वं तु तद्योग्यतामात्रेण, न तु स्थाप्यमानतयेति।

अस्तु तर्हीति भाष्यार्थमाह वार्त्तिककारः, अपरे त्विति। (१।१।३) तस्मात्प्रतिपक्षहीनो वितण्डेति वक्तव्यमित्यर्थः। प-रिहरति। अयुक्तं चैतदिति। न तावदस्थाप्यमानस्यापि स्थाप-नार्हतालक्षणा पक्षता न युज्यते, तस्मान्नवैतण्डिको दूषणादन्यत् किञ्चिदभ्युपगच्छतीति अनभ्युपगमात् पक्षोऽस्य नास्तीति व-क्तव्यम्, तथा च चतुर्वर्गाभ्युपगमे विरोधोऽनभ्युपगमे वा नायं लौकिको न परीक्षक इति प्रसङ्ग इति भावः। प्रतिपादयितुरय-थार्थावबोधं प्रतिपत्तारं चात्मानमित्यर्थः। यस्तु मन्यते च-तुर्वर्गाभ्युपगमेऽपि दूषणमात्रं वितण्डेत्येव वक्तव्यं लाघवायेति, तन्मतमुपन्यस्यातिप्रसङ्गापादनेन दूषयति। दूषणमात्रेति। स-माख्यानिर्वचनसामर्थ्यादेव गम्यत इत्यर्थः। उपसंहरति। तस्मा-दिति। तदनेनार्थतो पक्षे खल्वित्यादि भाष्यं व्याख्यातम्॥३॥

उद्देशक्रमानुरोधेन वितण्डानन्तरं हेत्वाभासेषु लक्षयितव्ये-ष्वर्थाक्षिप्तसामान्यलक्षणमेषां विभागोद्देशपरं सूत्रम्।

सव्य-सा: (सू० ४)॥ तद्व्याख्यानपरं भाष्यं समाख्यानिरुक्तिवशेन सामान्यलक्षणप्रतिपादकं वार्त्तिककारः पठति। हेतु लक्षणाभावादिति। पृच्छति। किं पुनरि-ति। न ह्यन्यस्यान्यत्वमात्रेण सादृश्यं, मा भूत्सर्वस्य सर्व-सादृश्यमिति भावः। उत्तरम्। प्रतिज्ञेति। प्रयोगगतं सामान्यमुक्त्वा प्रयोज्यगतमाह। अन्यतमेति। अबाधि-तविषयत्वासत्प्रतिपक्षितत्त्वे सती अप्यविवक्षित्वा त्रै-लक्षण्यद्वलक्षण्याभिधानं द्रष्टव्यम्। कोपमतिरोहितम्।

एतस्यां त्रिषोडश्यां साध्यव्यापकसाध्यैकदेशवृत्तिधर्मभेदात् षोडशीद्वयं विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिः।(१६४।३) एवं समर्थासमर्थविशेषणभेदाच्चतुःषष्टिः। तदेतच्चतुःषष्टिद्वयमष्टाविंशतिकं शतं पूर्वया त्रिषोडश्या सह षट्सप्ततं शतम् । साध्यव्यापकानां धर्मविशेषाणामुदाहरणान्याह । तत्रेति । विपक्षव्याप्त्यव्याप्तिभ्यां प्रथमद्वितीयौ साधारणौ । तृतीयोऽन्वयव्यतिरेकी साध्यतज्जातीयव्यापको हेतुरेव। विपक्षव्याप्त्यव्याप्तिभ्यां चतुर्थपञ्चमौ विरुद्धौ हेत्वाभासौ । यत्र विपक्षे न वृत्तिस्तं दर्शयति । अणुत्ववदिति । षष्ठोऽविद्यमानसपक्षविपक्षोऽसाधारणोऽत एव घटादिवदिति । सप्तमाष्टमावसपक्षव्याप्त्यव्याप्तिभ्यां साधारणौ। नवमः सपक्षैकदेशवृत्तिरन्वयव्यतिरेकी हेतुरेव। दशमैकादशौ सपक्षव्याप्त्यव्याप्तिभ्यामन्वयिनौ हेतू। द्वादशस्तु अविद्यमानविपक्षोऽसाधारणः । त्रयोदशचतुर्दशौ त्वविद्यमानसपक्षौ विपक्षव्याप्त्यव्याप्तिभ्यां विरुद्धौ । पञ्चदशोऽपि व्यतिरेकी हेतुरेव । षोडशस्तु अविद्यमानविपक्षोऽसाधारणः । यदि बाह्यकरणप्रत्यक्षे वाङ्मनसे इति साध्येत तदा नानित्यत्वं सपक्षव्यापकं स्यात् सामान्ये बाह्यकरणप्रत्यक्षेऽभावात्, अतः साध्यधर्मं विशिनष्टि । सामान्यविशेषवदिति ।(१६५।१८) अनित्ये रूपविज्ञाने अमूर्त्तत्वादिति।(१६६।२) रूपविज्ञानस्कन्धातिरिक्तानां वेदनासंज्ञासंस्कारस्कन्धानामनित्यतया सपक्षाणां व्यापकममूर्तत्वमिति । तज्जातीयैकदेशवृत्तित्वममूर्तत्वस्य दर्शयितुं यत्र न वर्तते तत्पुरस्सरमुदाहरणं रूपादिवदिति । अनित्यः शब्दोऽश्रावणत्वादिति नित्ये शब्दत्वे न वर्तते। अर्थः शब्द इति । शब्दो धर्मी, अर्थ इति साध्यो धर्मः । द्रव्यगुणकर्मणामन्यतम इत्यर्थः । यद्यश्रोत्रग्राह्यत्वादित्युच्येत ततः सामान्यादि-

ष्वनर्थेषु विपक्षेष्वपि वर्तेत, अत उक्तमश्रोत्रग्राह्यसामान्यव-त्त्वादिति । अश्रोत्रग्राह्यं च तत् सामान्यवच्चेति विग्रहः । ननु चाक्षुषत्वं न विपक्षाद्व्यावृत्तं, समवायस्यानाश्रितस्य चाक्षुषत्वादत उक्तम् औलूक्यपक्षे इति । (१६७।२) सिद्धान्तभेद इति । सौत्रान्तिकानामित्यर्थः । असमर्थविशेष्यस्योदाहरणं कृतकत्वे सति प्रमेयत्वादिति । असमर्थविशेषणस्योदाहरणं प्रमेयत्वे सति कृतकत्वादिति । निरपेक्षं खलु कृतकत्वमनित्यत्वे साध्ये समर्थं प्रमेयत्वं त्वन्यापेक्षमसमर्थमित्यर्थः । तदेवं त्रिषोडश्या प्रकृत्याऽष्टाचत्वारिंशद्भवन्ति हेत्वाभासाः । व्यापकाव्यापकभेदेन तु द्विषोडशी यदा विशेषणविशेष्यासिद्ध्या चोभयसम्प्रतिपन्नयाऽसमर्थविशेषणविशेष्यतया च उभयसम्प्रतिपन्नया संदिग्धविशेषणविशेष्यतया च उभयसम्प्रतिपन्नया विक्रियते तदा चतुःषष्टित्रयेण द्वानवतं शतं भवति । वाद्यसिद्धप्रतिवाद्यसिद्धतया उभयान्यतरसंदिग्धतया च चतुःषष्टिद्वयेनाष्टाविंशकं शतमपरम् । तदिदमन्यतरासिद्धा (१६८।३) इत्यनेन वार्तिककृता सूचितम् । द्वाभ्याममूना त्रिंशद् द्वात्रिंशादिति कथंचिद्व्युत्पत्त्या । ते पुनर्व्यापकाव्यापका व्यधिकरणविशेषणविशेष्यव्यधिकरणसंदिग्धविशेषणविशेष्यव्यधिकरणासमर्थविशेषणविशेष्यभेदेन चतुःषष्टित्रयेण द्वानवतं शतमपरम् । एवमप्रसिद्धाश्रयविशेषणविशेष्या उभयान्यतरपक्षाप्रसिद्ध्याऽष्टाविंशकं शतम् । अत्रापि द्वात्रिंशकमिति पूर्ववद्व्याख्येयम् । अन्यतरमात्रमत्र विवक्षितं, न तु वादिप्रतिवादिभेदः । ते पुनरसिद्धाश्रयाः पूर्ववद्भेदेन व्यधिकरणविशेषणविशेष्यसंदिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन चतुःषष्टित्रये सति द्वानवतं शतम् । तदेवमनन्तराभ्यां द्वानवतशताभ्यां शतत्रयं चतुरशी-

तं यत्तदेवाष्टाचत्वारिंशकशताभ्यां द्वानवतेन शतेन संपिण्डितं द्वात्रिंशदुत्तराष्टशती विकारभूता भवति । अष्टाचत्वारिंशत् प्रकृतयः पश्चान्निवेशनीया इति । उभयासिद्धाश्रयविशेष्यमुदाहरति, यथाऽग्निमान्देशो धूमवत्त्वात् । उक्तं हि प्राग् यथा न देशोऽग्निमत्तया साध्योपि तु धूमविशेष एवेति । अन्यतरप्रसिद्धाश्रयोदाहरणमाह । अस्ति चात्मा इच्छादिगुणत्वादिति । आश्रयासिद्धविशेषणादयोऽप्यूहनीयाः । असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम् । असमर्थाश्च तेऽव्यापकाश्च व्यधिकरणतयाऽसिद्धाश्चेति विग्रहः । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वादिति । कृतकत्वस्यैव विशेष्यस्य सामर्थ्यादसमर्थमनित्यत्वे प्रयत्नानन्तरीयकत्वम् । अव्यापकं च स्तनयित्नुशब्दानामव्यापकत्वात् । व्यधिकरणतयाऽसिद्धं च, कोष्ठवायुताल्वादिक्रियाया एव प्रयत्नानन्तरीयकत्वं न त्वाद्यस्यापि शब्दस्य, प्रागेव तु श्रोत्रसमवायिन इति । कृतकत्वे सति प्रयत्नानन्तरीयकत्वादिति चासमर्थाव्यापकासिद्धविशेष्याणामुदाहरणं द्रष्टव्यम् । वैभवेन त्वासिद्धतावर्जमुदाहरति । अव्यापकासमर्थविशेष्याणामुदाहरणम् । अनित्यः शब्दः प्रत्ययभेदभेदित्वेनोपलभ्यमानत्वात् । उपलभ्यमानत्वं नित्येऽप्यस्तीति व्यभिचारादसमर्थम् । कारणभेदभेदित्वमेव तु विशेषणं समर्थमव्यभिचारादिति । केवलव्यधिकरणविशेष्याणामुदाहरणमस्ति प्रधानं भेदादीनां गोघटादीनां सुखदुःखमोहात्मकत्वेनान्वयदर्शनादिति । अन्वयदर्शनं भेदाधिकरणतया न प्रधानाधिकरणमिति व्यधिकरणमिति व्यधिकरणं विशेष्यम् । केवलव्यधिकरणविशेषणानामुदारणं रूपरसगन्धस्पर्शशब्दाश्चन्दनशब्दादत्यन्तं भि-

शार्थाः समुदायसमुदाय्यसद्भावे सति रूपादीनामर्थानां रूपादिशब्दानां च तेन चन्दनशब्देन व्यपदिश्यमानत्वात्। चन्दनस्य रूपादय इति समुदायसमुदाय्यसंभवो रूपादिषु, व्यपदेशश्च रूपादिशब्देष्विति व्यधिकरणं विशेषणमित्यर्थः। तदनेन प्रपञ्चेन द्वात्रिंशदुत्तराऽष्टशती दर्शिता। सम्प्रति द्वानवतशतयुग्मान्तरं दर्शयितुमुदाहरणमाह। अन्यथासिद्धोदाहरणं नित्यः शब्दोऽभ्यासात्। सेयं क्रियाऽभ्यावृत्तिर्यथा शब्दानित्यत्वेऽप्युपपद्यते तथा द्वितीये दर्शयिष्यते। सिंहावलोकितन्यायेन व्यधिकरणविशेष्यं संदिग्धविशेषणमुदाहरति। संदिग्धाप्रसिद्धेति। विशेषणशब्दः तन्त्रेण विशेषणे विशेष्ये च कर्मकरणसाधनतया प्रयुक्ते वर्तते। तेन संदिग्धं विशेषणम् अप्रसिद्धं व्यधिकरणतया विशेष्यं येषां तेषामुदाहरणमित्यर्थः। यथा संदिह्यमानधूमादिभावेऽग्निमान् देशो धूमवत्त्वे सति प्रकाशत्वात्। धूमत्वे विशेषणं संदिग्धं प्रकाशकत्वं च विशेष्यं व्यधिकरणं, तत्खलु वह्नेर्धर्मो न देशस्येति। अप्रसिद्धविशेषणसंदिग्धविशेष्याणामुदाहरणं दर्शयति। विपर्ययेणेति। अप्रसिद्धेत्यपि द्रष्टव्यम्। अग्निमान देशः प्रकाशकत्वे सति धूमवत्वादिति। सम्प्रति द्वानवतशतयुग्मान्तरं दर्शयितुं भूमिरचनां करोति। एवमिति। ये संदिग्धासिद्धा व्यापकाव्यापकभेदेन द्वात्रिंशत्त एवोभयान्यतरासिद्ध्या चतुःषष्टिर्भवन्ति। ततः किमित्यत आह। ते चतुःषष्टितामापन्नाः। पूर्ववद्भेदेन व्यधिकरणविशेषणविशेष्यसंदिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन तावच्चतुःषष्टित्रयमित्येकं द्वानवतं शतम्, अपरं चाश्रयासिद्धव्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतं, तदिदं चतुरशीतं शतत्रयं संदिग्धासि-

द्धमाश्रित्य । अपरमपि द्वानवतशतयुग्मान्तरमन्यथासिद्धमाश्रित्याह । एवमन्यथासिद्धभेदो द्रष्टव्यः । अन्यथासिद्धभेदोऽपि हि व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्चतुःषष्टित्रयमिति पुनश्च स एवान्यथासिद्ध आश्रयासिद्धव्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्चतुःषष्टित्रयमिति द्वानवतशतयुग्मेन शतत्रयं चतुरशीतम् । अपरमपि द्वानवतशतयुग्ममाह । एवं विरुद्धविशेषणविरुद्धविशेष्याश्चेति । विरुद्धविशेषणविशेष्या अपि हि व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्च आश्रयासिद्धव्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदाच्च शतत्रयं चतुरशीतम् । तदेवमेभिस्त्रिभिश्चतुरशीतैः शतत्रयैर्द्विपञ्चाशच्छतोत्तरं सहस्रमेकं द्वात्रिंशदुत्तरयाऽष्टशत्या सहस्रमेकं चतुरशीतिसहिता च नवशती, तदेवं प्रकृतिभूताष्टचत्वारिंशत्प्रक्षेपेण संपिण्डितं द्वात्रिंशे द्वे सहस्रे (१६९१?) भवत इति ।

तन्मात्सत्त्वादिति । पञ्चानां चतुर्णां वा रूपाणां सम्पत्तिरव्यभिचारः, स चैकस्मिन्विषये विरुद्धयोर्न संभवति, अन्ततोऽसत्प्रतिपक्षस्यैव रूपस्याभावादित्यर्थः । पञ्चानां हेतूनामिति । सपक्षव्याप्त्यव्याप्तिभ्यामन्वयी द्वेधा, व्यतिरेक्येकः, अन्वयव्यतिरेक्यपि सपक्षव्याप्त्यव्याप्तिभ्यां द्वेधेति पञ्च हेतवः । पञ्चानां हेतूनां सरूपासरूपप्रतिबन्धात् पञ्च पञ्चका भवन्ति । सरूपोऽन्वयिनोऽन्वयी, व्यतिरेकिणो व्यतिरेकी, अन्वयव्यतिरेकिणोऽन्वयव्यतिरेकी । असरूपश्चान्वय्यादेर्व्यतिरेक्यादिः, तेन प्रतिबन्धः । एतदुक्तं भवति, अन्वय्यादावेकैकस्मिन् सरूपासरूपाः पञ्च हेतवः प्रतिबन्धका इति पञ्चभिः पञ्चकैः पञ्चविंशतिर्विरुद्धाव्यभिचारिण इति । चोदयति । लक्षणात एवेति । परिहरति ।

नानर्थकमिति । यत्परो हि शब्दस्तत्रासौ प्रमाणं, समाना-समानजातीयव्यवच्छेदकं च लक्षणसूत्रमिति तत्रैव प्रमाणं, न त्वियत्तायामतत्परत्वात् । न चासावार्थी, सतोऽप्यनुपयोगाद् अलक्ष्यमाणत्वोपपत्तेः प्रमेयान्तरवदिति ॥ ४ ॥

तदेवमर्थाक्षिप्तसामान्यलक्षणं विभागं दर्शयित्वा विशेषलक्षणमवतारयति भाष्यकारः, तेषां हेत्वाभासानां मध्ये ।

अनै-रः( सू. ५ ) ॥ अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्यलक्षणत्वेनावस्थितौ । यस्यानैकान्तिकपदार्थोऽप्रसिद्धः प्रसिद्धश्च सव्यभिचारपदार्थः, तं प्रत्यनैकान्त इति लक्ष्यनिर्देशः, सव्यभिचार इति लक्षणं, यस्य तु सव्यभिचारपदार्थोऽप्रसिद्धः प्रसिद्धश्चानैकान्तिकपदार्थस्तं प्रति सव्यभिचार इति लक्ष्यनिर्देशोऽनैकान्तिक इति लक्षणम् । तत्र सव्यभिचार इति लक्षणपदं कक्षीकृत्याह भाष्यकारो व्यभिचार एकत्राव्यवस्थितिः । एतदुक्तं भवति, सव्यभिचारपदं निर्वचनसामर्थ्याल्लक्षणपदमिति ।

अनैकान्तिकपदलक्षणपक्षे भाष्यकारोक्तमनित्यत्वमेकोऽन्त इत्यादि, तद्वार्तिककारः पर्युदासाभिप्रायेण व्याचष्टे। एकस्मिन्नन्ते नियत ऐकान्तिकइति।(१७०।१) न हेतुरैकान्तिको येन तदन्यत्वेन हेत्वाभाससङ्ग्रहादेकजातीयत्वेन हेत्वाभासानां विभागसूत्रविरोधः स्यात्,किं त्वेकस्मिन्नन्ते यो नियतः स ऐकान्तिकस्तत्प्रपर्ययादनैकान्तिकोऽनियतोऽनित्यत्वे नित्यत्वे चान्वयेन व्यतिरेकेण वोभयपक्षगामीति यावत् । न चैवम्भूता विरुद्धादयो हेत्वाभासा इत्यभिप्रायः । तदेवमनैकान्तिकः सव्यभिचार इति स्थिते पृच्छति । कः पुनरिति । उत्तरं साध्यतज्जातीयेति । अवगतमेव व्यभिचार इति, अनैकान्तिकपदवाच्यत्वमस्य कथ-

मित्यत आह । सर्वोऽयमिति । प्रमेयपदार्थस्य तु सर्वव्यापिनो नास्तो व्यतिरेकोऽस्तीत्यत उक्तमन्यत्र प्रमेयादिति ।

अत्र बौद्धैर्यद्विकल्प्य दूषणमुक्तं तदुपन्यस्यति । अनैकान्तिक इति । किं पुनरयमिति ।( १७० । ८ ) ऐकान्तिको(१) हेतुस्ततोऽन्यः सर्व एव हेत्वाभास इत्यर्थः । द्वितीयं पक्षं दूषयति । अथ प्रसज्यति । तथाऽपि हेतोरभावोऽनैकान्तिको न चासौ सव्यभिचारः, भावधर्मौ हि व्यभिचाराव्यभिचारौ, नाभावे सर्वोपाख्याविरहिणि युज्येते इत्यर्थः ।

तदेतच्छाक्यदूषणं निराकरोति । नायं पर्युदासपक्ष इति । पर्युदासपक्षस्तावदस्माकमभिमत उपपन्नतरश्च, केवलमयं प्रसज्यप्रतिषेधवल्लभस्तमादाय सर्वं दूषयतीति तमेवाङ्गीकृत्य सर्वत्र ब्रूम इत्याशयवतः समाधानम् । न पुनरब्राह्मणादावपि वार्तिककारस्य प्रसज्यप्रतिषेधोऽभिमतः, किं तु पर्युदास एवेति । अभ्युपेत्य तु तत्रापि प्रसज्यप्रतिषेधाभिधानम् । न हि प्रसज्यप्रतिषेधस्तुच्छोऽपि तु कस्य चिद्वस्तुनोऽभावेन विशिष्टं किञ्चिदेव वस्त्वित्यर्थः ।

अत्र भाष्यं निदर्शनं नित्यः शब्दोऽस्पर्शत्वादिति । वैधर्म्ये दृष्टान्तमाह । स्पर्शवानिति । अनित्यः कुम्भः स्पर्शवान् दृष्ट इति योजना, वैधर्म्ये व्याप्यव्यापकवैपरीत्यादिति । वैधर्म्यव्यभिचारमाह । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्यते । न हि यदनित्यं तत्सर्वं स्पर्शवद् बुद्ध्यादिभिर्व्यभिचारात् । साधर्म्येऽप्येष व्यभिचारो वक्ष्यत इतीह नोक्तम् । ननु च मा भूदित्यत्रं सा-

(१) अनैकान्तिक इति पु० पा० ।

ध्यम्, अस्पर्शत्वमेवास्तु नित्यत्वस्य साध्यमित्यत आह। स्पर्शवांश्चाणुर्नित्यश्चेति। तथाऽपि यदस्पर्शवन्न भवति तन्नित्यमपि न भवतीति वैधर्म्यं व्यभिचरति, स्पर्शवतोऽप्यणोर्नित्यत्वादित्यर्थः। साधर्म्यव्यभिचारमाह। आत्मादौ चेति।

अत्र वार्त्तिककारोऽस्पर्शवत्त्वस्य हेतोः प्रश्नपूर्वकं स्वरूपं निष्कर्षति। किं पुनस्तदस्पर्शत्वं शब्दाद्भिन्नमित्यर्थः। सत्ताविशेषणो वा समवायः समवायविशेषणा वा सत्ता अन्वयव्यतिरेकाभ्यामित्यर्थः। वाक्यार्थे च पदप्रयोगो ऽस्पर्श इति श्रोत्रियपदवदित्याह। वाक्यार्थ इति। अनैकान्तिक इति लक्षणपक्षे चोदयति। अतिदेशेति।(१७१। ६) यदि हि क चिच्छास्त्रप्रदेशे अनैकान्तिकः कथित(१)स्तद्देशातिलङ्घनेनात्रातिदिश्यमानो विदितरूप इह सव्यभिचारं लक्षयेत् न त्वस्य शास्त्रप्रदेशे क चिदपि कीर्तनमस्तीत्यर्थः। परिहरति। नेदमिति। लोकप्रसिद्धत्वेनोक्तप्रायमित्यर्थः। अन्वयेनैवोभयान्तसन्नियतोऽनैकान्तिक इति मन्वानः शङ्कते। अव्यापकत्वादिति। परिहरति। व्यावृत्तीति। क्वचिदन्वयस्योभयान्तसंनियतता क्वचिद्व्यतिरेकस्येत्यर्थः।

एकेषां मतमुपन्यस्यति। अपरे त्विति। दूषयति। तैस्त्विति। नोदाहरणे व्यभिचाराल्लक्षणव्यभिचारो भवति, अन्यत्वात्। नो खलूदाहरणमाद्रियन्ते परीक्षकाः, किं तु लक्षणमित्यर्थः॥ ५॥

सिद्धान्त... (सू. ६)॥ पृच्छति। कोऽस्य सूत्रस्येति। (१७२।६) न खलु हेतुरचेतनः सिद्धान्तमभ्युपगच्छति। यश्चाभ्युपगच्छति चेतनो नासावन्यतमेन हेतुलक्षणेन युज्यते इ-

(१) कल्पितः—पाठः।

ति न हेत्वाभासः । न च पक्षः सिद्धान्त इति तद्विरोधी न विरुद्धः स्यादिति भावः । उत्तरम्, अभ्युपगतार्थविरोधी विरुद्धः । हेतुद्वारेण पुरुषस्याभ्युपगमो हेतावुपचारितः, अभ्युपगममात्रविवक्षया सिद्धान्तशब्दः प्रयुक्तो न पुनः सिद्धान्त एवेह विवक्षितः, तेन पक्षोऽभ्युपगमविषय इति तद्विरोधी हेत्वाभासः सङ्गृहीतो भवति । विशेषविरुद्धस्य च न हेत्वाभासतेत्युक्तं भवति । न हि विशेषोऽभ्युपगमस्य विषयः, न खल्वयं प्रतिज्ञापदगोचरः, किं तु प्रतिज्ञार्थस्य सिद्धावनुषज्यत इति नाभ्युपगमगोचर इति भावः । ईदृशस्य सूत्रव्याख्यानस्य फलमाह । एवं चेति । ईदृशं व्याख्यानमन्तरेणानुक्तस्य विरुद्धस्येत्यर्थः । अभ्युपगतेन बाध्यत इति । स्वरूपेण हेतुत्वेन वेत्यर्थः । तदनेन तं विरुणद्धीत्यादिभाष्यं व्याख्यातम् ।

चोदयति । नन्वेवमिति । यदि हेतुत्वबाधाद्विरुद्धो हेतुः, सव्यभिचारादयोऽपि विरुद्धाः, तेषामपि हेतुत्वं बाधितम्, अबाधे वा न हेत्वाभासा इति भावः । परिहरति सत्यमेक एवेति । ईदृशा विरुद्धत्वेन तुल्यत्वेऽप्यवान्तरभेदविवक्षया पञ्चत्वम् । यथा प्रमाणादीनां प्रमेयत्वेन तुल्यत्वेऽपि प्रमाणप्रमेयादीनामवान्तरभेदविवक्षया षोडशत्वम् । यथा वा तृणविशेष एवासाधारणतया तृणोलपतया व्याख्यायते । एवं विरुद्धविशेष एवासाधनैकान्तिकादिर्विरुद्धानैकान्तिकादिपदवाच्य इत्यर्थः ।

अत्रोदाहरणभाष्यम् । यथा सोऽयं विकार इति । महदहंकारपञ्चतन्मात्रैकादशेन्द्रियभूतसूक्ष्ममहाभूतानि विकारः, तस्य व्यक्तिर्धर्मलक्षणावस्थापरिणामः, तस्मादपाय इति । अत्र हेतुर्नित्यत्वप्रतिषेधादिति । तस्य व्याख्यानं न नित्यो विकार उपपद्यत इति । अपेतोऽपि विकारोऽस्ति विनाशप्रतिषे-

भात, सो ऽयं नित्यत्वप्रतिषेधादिति हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । एतदेव प्रश्नपूर्वकं विभजते । कथमित्यादिना । विरोधस्य द्व्याश्रयत्वात् सिद्धान्तेन विरुध्यत इत्यभिसन्धाय सिद्धान्तं व्याहन्तीत्युक्तमित्यर्थः ।

तदेतद्भाष्यं व्याचष्टे । उदाहरणमिति । ननु नित्यत्वप्रतिषेधादिति हेतुर्विनाशप्रतिषेधेन सिद्धान्तेन विरुध्यत इत्येवं ब्रुवाणः शास्त्रविरोधमापादयति, तथा च कालात्ययापदिष्टो हेत्वाभासो न विरुद्ध इत्यत आह । एवं ते वाक्ये परस्परार्थबाधिने इति । दृढतरप्रमाणबाधितो हि हेतुः कालात्ययापदिष्टो भवति । यथा ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदिति हेतुः,

"गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः" ॥

इत्यादिभिरागमैरतिदृढैर्बाधितः कालात्ययापदिष्टतया हेत्वाभासो भवति । प्रकृते वाक्ये परस्परविरुद्धार्थतया न प्रतिष्ठां लभेते, न पुनरन्यतरदन्यतरेण शक्यं बाधितुं, द्वयोस्तुल्यबलत्वात्, तस्मान्नायं कालात्ययापदिष्ट इत्यर्थः ।

व्याख्यान्तरमाह । प्रतिज्ञाहेत्वोर्वा विरोध इति । सोऽयं विकारो व्यक्तेरपैतीति प्रतिज्ञा नित्यत्वप्रतिषेधादिति हेतुना विरुध्यते । व्यक्तिमात्रादपैति न तु विनश्यतीति हि प्रतिज्ञार्थो ऽपेतो ऽप्यस्ति विनाशप्रतिषेधादित्यनेन व्याख्यातः । तथा च व्यक्तेरपैतीत्यनेन विकारस्य नित्यत्वं प्रतिज्ञातं नित्यत्वप्रतिषेधादित्यनेन हेतुना विरुद्धं भवति । स्वसिद्धान्तेनेति । स्वपक्षेणेत्यर्थः । अत्र चार्थे सुगमं भाष्यम् ।

अत्र वार्तिककारश्चोदयति । ननु प्रतिज्ञाविरोध इति । प्रतिज्ञाहेत्वोर्विरोध इत्यर्थः । परिहरति । नैष दोष इति । प्रतिज्ञाश्रितत्वं विरोधस्य विवक्षित्वा निग्रहस्थानेषु प्रतिज्ञाविरोधस्योपादानम् । हेत्वाश्रितत्वं तु तस्यैव विरोधस्य विवक्षित्वा हेत्वाभासेऽन्तर्भाव इति । यदा प्रतिज्ञाया हेतुविरोध इति ( १७३।४ ) हेतोरप्यन्यतरासिद्धतया प्रतिज्ञातुल्यत्वाभिप्रायम् । यदि हेतुरुभयासिद्धो भवति तदा हेतोर्वा प्रतिज्ञाविरोधत्वमिति । उपसंहरति । अत इति । हेतोर्विरोधोदाहरणम् विरोधकत्वं विरोधः । शब्दस्योत्पत्तिधर्मकत्वं प्रमाणविनिश्चितं नित्यत्वप्रतिज्ञां बाधते इत्यर्थः । प्रसङ्गाद्धेत्वाभासातिरिक्तस्य प्रतिज्ञापदयोर्विरोधस्य निग्रहस्थानस्योदाहरणमाह प्रतिज्ञाविरोधस्येति । तृतीयेऽध्याये चैष विरोध उपपादयिष्यते । हेतोरन्यतरासिद्धतया समानबलयोः प्रतिज्ञाहेत्वोर्विरोधोदाहरणं गुणेति । हेतुविरोधोदाहरणं नास्त्येको भाव इति । उत्पत्तिमत्त्वं ह्यन्यतरासिद्धमपि शक्यसाधनमिति प्रतिज्ञार्थं व्याहन्ति । समूहे भावशब्दप्रयोगादिति । उभयसिद्धमेव प्रतिज्ञार्थं व्याहन्तीत्येतावता भेद इत्यर्थः ॥ ६ ॥

यस्मा–मः (सू० ७) ॥ प्रकरणशब्दार्थमाह भाष्यकारः । विमर्षाधिष्ठानाविति । विमर्षः संशयः, तस्य विषयौ अनवसितावनिर्णीतौ, तादृशयोरेव पक्षप्रतिपक्षशब्दवाच्यत्वात्, प्रक्रियते साध्यत्वेनाधिक्रियते इति व्युत्पत्त्या प्रकरणम् । चिन्तापदं व्याचष्ट, तस्य–प्रकरणस्य, चिन्ता विमर्षात्प्रभृति प्राग् निर्णयात् समीक्षणमालोचनं जिज्ञासा, सा खलु तत्त्वानुपलब्ध्या कृता । नेखल्वयं नित्यधर्मान्नित्यत्वाविनाभाविनो-

५ नित्यधर्मान् वाअनित्यत्वाविनाभाविन उपलभमानस्तत्र संदि-

ग्धे, तच्च जिज्ञासते, सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुपलब्धिर्वा विचित्राभिसंधितया वादिनां निर्णयायापदिश्यमाना प्रकरणसमो हेत्वाभासः। कुतः, उभयपक्षसाम्यात्। यथा नित्यत्वपक्षेऽनित्यधर्मानुपलब्धिरेवमनित्यत्वपक्षेऽपि नित्यधर्मानुपलब्धिः, सेयं तत्त्वानुपलब्धिमात्रविवक्षयोभयपक्षसमा, प्रकरणसमा तु यथा प्रकरणमनिश्चायकमेवमियमपीत्यर्थः। व्युत्पत्तिमात्रं चैतत्—प्रकरणसमपदस्य, प्रवृत्तिनिमित्तन्तु सत्प्रतिपक्षत्वं, अन्यथाऽनैकान्तिकस्यापि प्रकरणसमत्वप्रसङ्गादिति। प्रज्ञापनं प्रज्ञाप्यतेऽनेनेति व्युत्पत्त्या निदर्शनमुक्तम्। अनैकान्तिकत्वशङ्कां सत्प्रतिपक्षस्य व्यवच्छिनत्ति। यत्र समान इति। संशयेन समोऽनिश्चायकत्वादिति। एतदुक्तं भवति। न हि नित्यधर्मानुपलब्धिरुभयसिद्धे नित्येऽस्ति येन सव्यभिचारो भवेन्नाप्यनित्यधर्मानुपलब्धिः उभयसम्मतेऽनित्येऽस्ति येन सव्यभिचारो भवेदपि, तु परस्परमनयोः सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति

यस्मात्प्रकरणचिन्तेत्युक्तं सूत्रकृता। अत्र यस्मादर्थं प्रश्नपूर्वकं दर्शयति वार्त्तिककारः कस्मादिति। (१७३। १४) कारणत्वं तत्त्वानुपलब्धेर्व्यतिरेकेण दर्शयति। यस्मादिति। अत एवेति। तत्त्वानुपलब्धेरित्यर्थः। चोदयति। नन्वयमिति। पक्षप्रतिपक्षौ हि प्रकरणं, तौ च साध्यौ, ताभ्यां च समः साध्यसमः। तथा च साध्यसमाद् हेत्वाभासान्न पृथग् निर्देशः प्रकरणसमस्येत्यर्थः। परिहरति। नाविशिष्ट इति। यद्यपि प्रकरणसमशब्दो व्युत्पत्त्या साध्याविशिष्टेन समानार्थः, तथाऽपि प्रवृत्तिनिमित्तमस्य सत्प्रतिपक्षत्वम्। न च तत्वानुपलब्धिः स्वयमसिद्धा, सा ह्युपलम्भाभावेन सुलभेति भावः।

परमतमनुभाष्यातिप्रसङ्गापादनेन दूषयति । ये तु संशयहेतुत्वादिति । चोदयति । समूह इति । (१७४।१) यस्मिन्सति भवत्येव तत्कारणं, समूहे सति च भवत्येवेति, नैकैकस्मिन्, तस्मान्नैकैकं कारणमिति भावः । परिहरति । समूहः कारणमिति । न ह्यकारणानां समूहः कारणं भवितुमर्हति, अतिप्रसङ्गात् । न च समूहिवैलक्षण्यमन्तरेणाऽऽजानतः समूहस्य वैलक्षण्यं, तस्मात्समूहिन एवान्योन्यसमवधानवन्तः कारणं, तथा च प्रत्यक्षस्योपपन्नं संशयकारणत्वं, न च यस्मिन् सति भवत्येव तत्कारणम्, अपि तु यस्मिन्सत्येव न त्वसतीति क्षणभङ्गभङ्गे वक्ष्याम इति । ननूभयधर्मानुपलब्धिरुभयपक्षसाधारणीति सव्यभिचार एवेत्यत आह । उभयधर्मानुपलब्धाविति । नोभयधर्मानुपलब्धिर्हेतुरपि तु एकधर्मानुपलब्धिः, न चासौ साधारणी, किं तु सत्प्रतिक्षेत्यर्थः । उभयविशेषानुपलब्धेः प्रकरणसमत्वेनाभिधानाशक्यत्वात् ।

प्रकरणसमस्योदाहरणान्तरं दूषयति । शरीरान्यत्वं त्विति । परेषां किलोदाहरणं नित्य आत्मा शरीरादन्यत्वाद् आकाशवदिति । अत्र शरीरादन्यत्वमुपलभमानो यदा तत्त्वं नित्यत्वमात्मनः प्रत्येति, न हि तदा जिज्ञासितुं नित्यत्वं प्रवर्त्तते । यदा तु तत्त्वं नित्यत्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्त्तते । तस्मादन्वयव्यतिरेकाभ्यां तत्त्वानुपलब्धिरेव प्रकरणचिन्ताप्रवर्त्तिका न शरीरादन्यत्वं, तस्मान्नैतत्प्रकरणसमस्योदाहरणम्, अपि तु तत्त्वानुपलब्धिरेव । इतश्चैतन्न प्रकरणसमस्योदाहरणमित्याह । शरीरादन्यत्वं चानैकान्तिकम् । उपसंहरति । अतो न सूत्रार्थः । न सूत्रविषयः । एवमन्यान्यपि सत्प्रतिपक्षोदाहरणान्यूहनीयानि ॥७॥

साध्या-मः (सू.८)॥ अत्र साध्यसम इति लक्ष्यनिर्देशः साध्याविशिष्ट इति लक्षणम्। तदनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां सङ्ग्रहः, तेषामसिद्धत्वेन साध्याविशिष्टत्वात्। अत्र चासिद्धः साध्यसम इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धेः प्रागहेतुत्वज्ञापनार्थमन्यथाऽत्यन्तासिद्ध एव साध्यसमो नान्यतरासिद्धः, तस्य कदाचित् सिद्धेरिति भ्रान्तिः स्यात्। साध्याविशिष्टेन तु सोऽपि गृह्यत इति। नन्वेवं साध्याविशिष्टत्वेनान्यतरासिद्ध एव स्यान्नेतरे, तेषामसिद्धत्वेन साध्याविशेषाभावादित्यत उक्तम्। साध्यत्वादिति यदि हि साध्यं नासिद्धं भवेत् साध्यत्वादेव च्यवेत, न खलु सिद्धं साध्यते, तस्मात् साध्यत्वादसिद्धता, सा च कस्यचित् सर्वदा कादाचित्की कस्यचिदिति सर्वेषामविशिष्टत्वमिति नाव्याप्तिः। नापि साध्यत्वस्यातिप्रसक्त्याऽतिव्याप्तिः, हेत्वाभाससामान्यलक्षणापेक्षित्वात्तद्विशेषलक्षणस्येति सूत्रार्थः।

साधनीयत्वादिति च भाष्यगतं न साध्यत्वादित्यस्य व्याख्यानमपि तु गतिमत्त्वस्यासिद्धत्वपरम्।

अत्र वार्त्तिककारः सूत्रार्थं व्याचष्टे साध्येनाविशिष्टो य इति। साध्येन व्यभिचारो मा भूदित्यत आह। साधनधर्म इति। हेत्वाभाससामान्यलक्षणयोगे सति एतल्लक्षणमिति न व्यभिचार इति भावः।

अत्र भाष्यकारेण स्वरूपासिद्धाश्रयासिद्धान्यथासिद्धानां साधारणमुदाहरणमुक्तं द्रव्यं च्छाया गतिमत्त्वादिति। तद्विभजते वार्त्तिककारः, द्रव्यं च्छायेति। अत्र स्वरूपासिद्धतां तावदाह। यथैवेति। आश्रयासिद्धतामवतारयितुं गतिमत्त्वं छायायाः पञ्चावयवेन वाक्येन साधयति। गतिमत्त्वमिति।

आश्रयासिद्धमाह, नाश्रयासिद्धत्वादिति । सत्या एव च्छायाया देशान्तरे दर्शनाद्योऽस्या गतिमत्त्वमनुमिनोति तं प्रत्याश्रयासिद्धं देशान्तरे दर्शनम् । तदाश्रयासिद्धत्वात् । तदिदमुक्तं सति द्रव्यभाव इति । सति सत्त्व इत्यर्थः । न तावच्छाया सामान्यविशेषसमवायान्तर्भूता अनित्यत्वात्तस्याः नापि कर्म संयोगविभागासमवायिकारणत्वाभावात् । न गुणो द्रव्यासमवायात् । न मनोदिक्कालगुणः तद्गुणानामप्रत्यक्षत्वात् । नाप्यात्मगुणो बाह्येन्द्रियप्रत्यक्षत्वात् । नापि नभोनभस्वतोः तद्गुणानामचाक्षुषत्वात् । नापि तेजसः तद्विरोधित्वात् तत्सहचरितगुणान्तरानुपलब्धेश्च । अत एव न पृथिवीपाथसोरपि । अपि च तद्गुणश्चाक्षुषो नालोकमन्तरेण शक्यग्रहः च्छाया तु तमन्तरेण गृह्यते तस्मिंस्तु सति न गृह्यत इति दुर्घटम् । नापि द्रव्यं तद्धि पृथिव्यादीनामन्यतममेव भवेदन्यद्वा दशमम् । न तावदन्यतमं तद्गुणानामनुपलब्धेः नाप्यन्यद्रूपवदिति युज्यते । तस्याद्रव्यस्य प्रत्यक्षत्वानुपपत्तेः अस्पर्शवत्त्वादनारम्भकत्वेनानेकद्रव्यत्वाभावात् । तस्माद्भाऽभाव एव च्छाया न तु सतीति सिद्धम् ।

यस्तु मन्यते मा भूच्छाया सती भवतु भाऽभावः, तथाऽपि नाश्रयासिद्धता देशान्तरदर्शनस्य भाऽभावाश्रयत्वादेवेति तं प्रत्यभ्युपेत्यान्यथासिद्धतया साध्यसमत्वमापादयति । अभ्युपेत्येति । स्वाभाविको हि सम्बन्धो हेतोः साध्येन सहानुमानाङ्गं नौपाधिक इति विवेचितमनुमानलक्षणे । तदयमन्यथासिद्ध औपाधिकसम्बन्धो भवति हेत्वाभासः । सेयं हेतोरसिद्धिर्द्विधा स्वरूपतो हेतुत्वेन च । स्वरूपतोऽपि द्वेधा स्वत आश्रयासिद्ध्या च । न चैतावता सव्यभिचारादीनामपि हेतुत्वासिद्धेरसिद्ध एवान्तर्भावः, सव्यभिचारत्वादिविशेषणेन तेषामतो भे-

दात्, अन्यथासिद्धस्य तु तद्विशेषणत्वायोगिनो हेतुत्वासिद्धिमात्रेण साध्यसमेऽन्तर्भाव इति सर्वमदातम्।

संकलयति। सोऽयमिति। (१७९।४) त एतेऽसिद्धभेदा उदाहरणभेदेष्वपि द्रष्टव्याः यथा नित्यः शब्दः चाक्षुषत्वादिति अयमसिद्धः। तनुभुवनादीनामकर्त्तेश्वरोऽशरीरत्वादित्याश्रयासिद्धः। स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यन्यथासिद्धः। अन्नपानपरिणतिभेदनिबन्धनत्वाद्रूपभेदस्यान्यथासिद्धत्वमिति। अयमप्यसिद्धत्वादिति भाष्ये अपिशब्देनाश्रयस्य च्छायायाः सत्त्वेनासिद्धिः सूचिता।

अत्र भदन्तेनेदं साध्यसमलक्षणमुदाहरणान्तरं कल्पयित्वा दूषितम्। इदं किलास्योदाहरणं नित्यः शब्दोऽस्पर्शत्वात् बुद्धिवदिति। तदेतत्त्रिधाऽप्यसिद्धं न भवतीति दूषयित्वा भदन्तेन शङ्कितम्, अथ साध्येनाविशिष्टो दृष्टान्तो यस्मिन्स साध्याविशिष्टो हेत्वाभास इति बुद्धेर्दृष्टान्तस्य नित्यत्वेनासिद्धत्वादित्याशङ्का बहुव्रीह्यभावेन दूषितम्। तदेतत्सर्वमनभ्युपगमेन वार्त्तिककारो दूषयति। नित्यः शब्द इति। यद्येतन्नोदाहरणं, किमुदाहरणं को वा सूत्रार्थ इत्यत आह। यथा त्वस्माभिरिति। अयं भदन्तोक्तो दोष इत्यर्थः। कस्मादित्यत आह। भदन्तेन सूत्रार्थो न विज्ञातः, न हि सव्यभिचारोऽनेन लक्ष्यते। येन सव्यभिचारमस्पर्शत्वमस्योदाहरणं स्यात्, किं तु साध्यसमः, नापि व्यधिकरणबहुव्रीहिदूषणेनाऽक्षरार्थो ज्ञातः, नापि बुद्धिवदिति दृष्टान्ताभासमेव हेत्वाभासं कुर्वता हेत्वाभासदृष्टान्ताभासौ ज्ञातौ भदन्तेनेत्यर्थः॥ ८॥

काला–तः (सू. ९)॥ अत्र कालातीत इति लक्ष्यनिर्देशः, कालात्ययापदिष्ट इति लक्षणम् हेतोरपदेशस्य हि

साध्यसंदेहविशिष्टःकालः, यथाऽऽहुः नानुपलब्धे न निर्णीते न्यायः प्रवर्त्तते अपि तु संदिग्ध इति । परे ऽप्याहुः संदिग्धे हेतुवचनादिति । यत्र च प्रत्यक्षानुमानागमविरोधोऽनुष्णोऽग्निर्द्रव्यत्वादिति, अश्रावणः शब्दो गुणत्वादिति च, शुचि नरशिरःकपालं प्राण्यङ्गत्वादिति च, स सर्वः प्रमाणतो विपरीतनिर्णयेन संदेहविशिष्टं कालमतिपततीति सोऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति । तथा चोदाहृतम् यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः स इत्यत्र वार्त्तिककृता । बाधाविनाभावयोः सहासंभव इति चात्र बौद्धानामाक्षेपोऽस्माभिः समाहितः । एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे, कालात्ययेन संशयकालात्ययेन युक्तो यस्यार्थैकदेशः, धर्मविशिष्टो हि धर्म्मी हेतोरपदिश्यमानस्यार्थः, सह्यर्थ्यते हेतुना, तस्यैकदेशः साध्यधर्मः, स धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितः, स तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनास्यार्थः । अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यान्नोदाहृतम् ।

परमते तु कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषणमिति यावत्, स कालात्ययापदिष्ट इति योजना । परमतेनैव निदर्शनमाह । निदर्शनमिति । नित्यत्वं चात्रावस्थानमात्रमभिमतमिति । अन्यथा घटादिभिरालोकसंयोगव्यङ्ग्यैर्व्यभिचारः । तदेतत् पञ्चावयवं वाक्यमुपन्यस्य संयोगव्यङ्ग्यत्वस्य हेतोरेकदेशस्य विशेषणस्य संयोगस्य व्यक्तिकालात्ययेन हेत्वाभासतामाह । अयमहेतुरिति । स पुनरयमसिद्धविशेषणतया हेत्वाभासः साध्यसम एवेति न पृथग्वाच्य इति स्थूलतया एव दोषो भाष्यकारेण नोद्भावितः ।

यत्पुनर्भदन्तेन कालातीतस्य व्याख्यानं कृतं प्रतिज्ञानन्तरं हि हेतोः कालः तमतीत्य हेतुः पश्चादपदिश्यमानः कालातीतो भवति, तद्यथाऽनित्यः शब्दो घटादिवदित्युक्ते कस्मादित्यनुयुक्तो ब्रूते कृतकत्वादिति, स कालातीत इति । तेन चैवं दूषितं, किं निराकाङ्क्षे वादिन्येष प्रतिवादिनः प्रश्नः, आहो साकाङ्क्षे, यदि निराकाङ्क्षे तदा न्यूनमेवास्य निग्रहस्थानं न हेत्वाभासस्तस्याप्रयोगात् । प्रयुक्तो हि हेतुस्तदाभासो वा स्यान्नाप्रयुक्तः । अथ साकाङ्क्ष एव वादिनि प्रतिवादिनः प्रश्नस्तथाऽपि पश्चादप्यसौ हेतुः प्रयुक्तो हेतुरेव, न ह्यसौ तदा न स्वसाध्याविनाभूतोऽपक्षधर्म्मो वेति । तस्मान्न कालातीतो नामास्ति हेत्वाभास इति । तदेतद्भदन्तदूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति । अवयवविपर्यासवचनं त्विति । अनभ्युपगमहेतुं पृच्छति । कस्मादिति । उत्तरं यस्येति । अर्थेन सामर्थ्येन सम्बन्धो ऽर्थसंबन्धः । अपि च पौनरुक्त्यादपि नाभ्युपगम्यत इत्याह । अवयवेति । यस्यापदिश्यमानस्येत्यादि पुनरुच्यते इत्यन्तं वार्त्तिकं भाष्यव्याख्यानेनैव व्याख्यातम् । शङ्कते । समीकृतेऽभिधानादिति । ( १७६।१ ) अयमर्थो नैतदप्राप्तकालेन निग्रहस्थानेन पुनरुक्तम्, अपि तु हेत्वाभास एव । स ह्यवयवविपर्यास उच्यते यत्रैकग्रन्थेनैव वादी प्रतिज्ञोदाहरणादि प्रयुज्य पश्चाद्धेतुं प्रयुङ्क्ते । एष तु प्रतिज्ञोदाहरणे प्रयुज्य विरतः प्रतिवादिनाऽनुयुक्तः पश्चाद् हेतुं प्रयुङ्क्ते । तस्माद् न्यूनतादूषणेन पक्षे समीकृते पक्षमात्रतां नीते सिद्धव्यवस्थातः प्रच्याविते पश्चादभिधानाद्धेतोरेष कालातीतो हेत्वाभासो न पुनरप्राप्तकाल-निग्रहस्थानमित्ति चेदिति । निराकरोति यदीति । हेत्वनभिधानेन न्यूनतया समीकृतः पक्षः, किमत्र हेतोरसामर्थ्यं, न ह्यन्य-

दोषेणान्यो युज्यत इत्यर्थः । शङ्किता ब्रूते । एतदस्येति । निराकरोति । नैतदिति । न्यूनतया निगृहीतो यदि पश्चादभिधानेन निग्रहीतव्यः, ततो वाद्येव निगृह्यताम् । न त्वयं पश्चादभिहित इति समर्थः शक्यो हेतुर्निग्रहीतुमिति नायं समीकृताऽभिहितत्वेनापि हेत्वाभास इत्यर्थः । उभयानिराकरणमुपसंहरति तस्मादिति ॥ ९ ॥

उद्देशक्रमानुरोधेन लक्षणक्रमस्य हेत्वाभासानन्तरं छलस्योद्देशाच्छललक्षणस्यापि हेत्वाभासलक्षणानन्तर्यमाह भाष्यकारः । अथ छलम् ।

वच–लम् ( सू. १० ) ॥ यथा वक्तुरभिमतोऽर्थः ततो विरुद्धोऽर्थस्तस्य विकल्पः कल्पना सैवोपपत्तिः तया । अथ लक्षणान्तरवच्छलस्य सामान्यलक्षणे कस्मादुदाहरणं न दीयत इयत आह । न सामान्यलक्षणे इति । सामान्यविशेषवत्तु सर्वमुदाहरणं, निर्विशेषस्य सामान्यस्यासत्त्वेन केवलस्य सामान्यस्योदाहरणमशक्यमित्यर्थः । विभागे त्विति । विभज्यत इति विभागो विशेषलक्षणं, तस्मिन्नुदाहरणानि ॥ १० ॥

छलसामान्यलक्षणमभिधाय तद्विशेषलक्षणान्यभिधातुं प्रथमं तावन्न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागमवतारयति । विभागश्चेति । विभज्येत ऽनेनेति विभागः सूत्रमुच्यते ॥ ११ ॥

तत्र च विशेषलक्षणमवतारयति । तेषां–छलानां मध्ये वाक्छलं लक्ष्यते–

अवि लम् ( सू. १२ ) ॥ नवः कम्बलो यस्येति एको विग्रहो नव कम्बला अस्येति अपर इति विग्रहे विशेषः । वाक्छलशब्दार्थं व्युत्पादयति । वाचि निमित्ते छलं वाक्छलमिति । नवकम्बल इति उभयत्रापि समानायां वाचि निमित्त-

भूतायामित्यर्थः । तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम्, परवाक्ये पर्यनुयोगोऽस्येति चोक्तम्, तदत्र यथा पर्यनुयोगः तथा दर्शयति शिष्यहिततया भाष्यकारः अस्य प्रत्यवस्थानमिति । उभयार्थभानेऽसम्भवदर्थकल्पनमयुक्तमित्यर्थः । अथ प्रयोक्ताऽपि कथं साधारणेन शब्देनार्थविशेषं बोधयति, अबोधयँश्च कथं प्रतिपादको नामेत्यत आह । प्रसिद्धश्चेति । सम्बन्धस्वरूपमाह । अभिधानाभिधेययोर्यो नियमो ऽयमेव शब्दोऽस्यैवार्थस्येति तत्र यः पुरुषस्य नियोगोऽस्मादयमेव बोद्धव्य इत्येवमाकारः । किमतो यद्येवमत आह । प्रयुक्तपूर्वश्चेति । तथाऽपि किमित्यत आह । प्रयोगश्चेति । तामिमां भूमिरचनां प्रकृते योजयति । तत्रैवमर्थगत्यर्थ इति । एतदुक्तं भवति । न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कश्चिदर्थं शृङ्ग्याहिकया बोधयत्यपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्त्तते । तस्मान्नैष प्रतिपादयितुरपराधो यदेष विशेषशब्दैर्विशेषान्न प्रतिपादयति । किं तु सङ्केतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्त्तते । तस्माद्यथासङ्केतं बोधयन्नापराध्यः प्रयोक्तेति सिद्धम् । सामर्थ्यमेव दर्शयति । यत्रार्थक्रियाचोदनेति ।

स्यादेतदविशेषाभिहितेऽर्थ इति न युक्तं, न हि नवकम्बल इति पदं प्रकरणादिनिरपेक्षं कश्चिदर्थमविशेषेणाभिधत्ते गवादिशब्दवत् । न हि सङ्ख्याविशेषे च नवीनत्वे चास्ति कश्चित् सामान्यविशेषो बाहुलेयादिष्विव गोत्वं यमभिदधीतेत्यत आह वार्तिककारः, सामान्यश्रुतीति । अभिहितिरभिहितम्, उच्चारणमिति यावत् । समानः शब्दो नार्थे सामान्यमित्यर्थः । अश्व इति नामप-

दमश्वत्वस्य वाचकम्। आख्यातपदं यदा कस्य चिदभिमुखं प्रयुज्यते अश्व इति तदा वृद्धिं गतोऽसीति प्रतीयते। चोदयति। अविशेषेति। समानो हि शब्दोऽभिधेये संशयमाधत्ते न त्वर्थमभिधत्त इत्यर्थः। परिहरति। न प्रकरणादीति। (१७-७। २) श्वेतो धावतीति इतः सारमेयो द्रुततरं याति श्विश्री निर्णेनेक्तीत्यर्थः। अर्थ इत्यस्य प्रयोजनमाह। अर्थग्रहणमिति। अविशेषश्रुतौ शब्दे सति अर्थे अर्थान्तरकल्पना न शब्द इत्यर्थः। अस्य प्रत्यवस्थानमित्यादिभाष्यं व्याचष्टे। तस्येति। सुगमम् ॥ १२ ॥

संभव-लम् ( सू. १३ सम्भवतोऽर्थस्य ब्राह्मणविशेषस्य विद्याचरणसंपदा, विद्याचरणसंपदमत्येति यत्सामान्यं ब्राह्मणत्वं व्रात्ये ब्राह्मणे, तस्य ब्राह्मणत्वस्यातिसामान्यस्य योगादसम्भूतार्थकल्पनया यः प्रतिषेधः तत्सामान्यच्छलम्। अहो खल्वयं ब्राह्मणो विद्याचरणसंपन्न इति हि स्तुत्यर्थं वाक्यमभ्यनुजानतोक्तं संभवति ब्राह्मणे विद्याचरणसंपदिति, तदेतदपि वाक्यं स्तुत्यर्थमेव, न त्वस्य ब्राह्मणत्वाद्धेतोर्विद्याचरणसंपद्विवक्षितेति। तत्र परो हेतुत्वमस्याविवक्षितमारोप्य वचनं विहन्तीति तदिदं सामान्यच्छलमिति। विषयानुवाद इति। संपद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः। कस्याचिवक्षितहेतुकस्य पुंसः। तदेतद्वार्तिककारो व्याचष्टे। सामान्यस्येति। विवक्षितार्थमतिगतं सामान्यमित्यर्थः ॥१३॥

धर्म-लम् ( सू. १४ ) ॥ शब्दस्य धर्मः प्रयोगः, तस्य विकल्पो द्वैविध्यम्। तस्य च द्विविधः प्रयोगः प्रधानो भाक्तश्च। तत्रापि प्रधान औत्सर्गिकः, तस्य तु कचिदपवादाद् भाक्तो भवति। तदेतदाह भाष्यकारः, अभिधानस्य यथार्थे

प्रयोगो धर्मः औत्सर्गिकः । तत्किमयमेव नेत्याह । विकल्पो द्वैविध्यम् । कोऽसौ द्वितीय इत्यत आह । उत्सर्गस्य कचिदपवादादन्यत्र दृष्टस्यान्यत्र प्रयोगः । तदेवं व्यवस्थिते धर्मविकल्पेन निर्देशे वाक्ये, निर्दिश्यतेऽनेनेति व्युत्पत्त्या, तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति अत्रार्थसद्भावेन प्रतिषेधः । तमेवार्थसद्भावमाह । मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्तीति । वार्त्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम् । ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः हन्त सर्वं सर्वत्र प्रयुज्येतेत्यत आह । उपचारो नीतार्थः । प्रापितार्थः । सहचरणादिना निमित्तेनेति । अन्यत्र दृष्टस्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः । न च्छन्दतः न छद्मनेत्यर्थः । ननु यदि भाक्ततयाऽप्युपपत्तिर्न किञ्चिज्जल्पाकभाषितं दुष्टं स्यात्, सर्वस्यैव यथाकथञ्चिद्भाक्तत्वेनोपपत्तेरित्यत आह । प्रधानभूतस्येति । भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धतया दृष्टान्तलाभाय लोकसिद्ध एवोपचारः कर्त्तव्यो नापूर्वो विना प्रयोजनम् । लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः । सूत्रव्याख्यानपरं वार्त्तिकं धर्मविकल्पनिर्देशशब्देन सूत्रस्थेनाभिधानं प्रयोगः शब्दस्य धर्मो भवन् द्विधाभिधीयते । द्वैविध्यमाह । प्रधानमिति । सोऽयमभिधानाभिधेयव्यवहार इति । अभिधानं शब्दो ऽभिधेयो गम्यः, स च कचिद्वाच्यः कचिद्भाक्त इति । सुबोधम् ॥ १४ ॥

परीक्षापर्वणः सन्निधानात्तदर्थं लक्षणपर्वण्यपि योग्यार्थे ? सूत्रकारः छललक्षणं परीक्षते ।

वाक्छल-न् ( सू. १५ ) ॥ स्थान्यर्थो गुणशब्दो यो वस्तुतः स एव प्रधानशब्दः स्थानार्थ इति कल्पयित्वेति

योजना । यथा वाक्छले नवीनार्थो नवशब्दः सङ्ख्याभेदे कल्पितस्तथेहापीति पूर्वपक्षः ॥१५॥

सिद्धान्तसूत्रम् ।

न त-त् (सू. १६) ॥ तस्योपचारच्छलेऽर्थसद्भावप्रतिषेधस्यार्थान्तरकल्पनातः वाक्छलादित्यर्थः ।

सूत्रतात्पर्यमाह वार्तिककारः । अविशेषादित्यस्येति । ( १७८ । ७ ) विधेयं वस्तु । मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते । मञ्चा इति त्वनूद्यते । अत एव गुणे त्वन्याय्यकल्पनेति मञ्चा इत्येतदप्रधानमनूद्यतया भाक्तं न तु क्रोशन्तीति, न विधौ परः शब्दार्थ इति न्यायात् । तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते नैव मञ्चाः क्रोशन्तीति च्छलवाक्येन । नवकम्बलो देवदत्त इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते । तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते । किं तु तदेकदेशस्यानेकताया इति महान् भेद इति सिद्धान्तः ॥ १६ ॥

अवि-ङ्गः ( सू. १७ ) ॥ किञ्चित्साधर्म्याद्द्वित्वाभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः । ओमिति ब्रुवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्गः । भाष्यवार्त्तिके अतिरोहितार्थे ॥ १७ ॥

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह भाष्यकारः। अतः छललक्षणादूर्ध्वम् ।

साध-तिः ( सू. १८ ) ॥ प्रतीपप्रवस्थानं प्रत्यवस्थानं तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्गोऽत उक्तं साधर्म्यवैधर्म्याभ्यामिति । न च च्छले साधर्म्यवैधर्म्ये स्तः, न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रादपि तु प्रयो(गा)जकादिति । प्रयुक्ते हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरिति । जल्पे

प्रयोगो धर्मः औत्सर्गिकः। तत्किमयमेव नेत्याह। विकल्पो द्वैविध्यम्। कोऽसौ द्वितीय इत्यत आह। उत्सर्गस्य क्वचिदपवादादन्यत्र दृष्टस्यान्यत्र प्रयोगः। तदेवं व्यवस्थिते धर्मविकल्पेन निर्देशो वाक्ये, निर्दिश्यतेऽनेनेति व्युत्पत्त्या, तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति अत्रार्थसद्भावेन प्रतिषेधः। तमेवार्थसद्भावमाह। मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्तीति। वार्त्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम्। ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः हन्त सर्वं सर्वत्र प्रयुज्येतेत्यत आह। उपचारो नीतार्थः। प्रापितार्थः। सहचरणादिना निमित्तेनेति। अन्यत्र दृष्टस्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः। न च्छन्दतः न छद्मनेत्यर्थः। ननु यदि भाक्ततयाऽप्युपपत्तिर्न किञ्चिज्जल्पाकभाषितं दुष्टं स्यात्, सर्वस्यैव यथाकथञ्चिद्भाक्तत्वेनोपपत्तेरित्यत आह। प्रधानभूतस्येति। भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धतया दृष्टान्तलाभाय लोकसिद्ध एवोपचारः कर्त्तव्यो नापूर्वो विना प्रयोजनम्। लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः। सूत्रव्याख्यानपरं वार्त्तिकं धर्मविकल्पनिर्देशशब्देन सूत्रस्थेनाभिधानं प्रयोगः शब्दस्य धर्मो भवन् द्विधाभिधीयते। द्वैविध्यमाह। प्रधानमिति। सोऽयमभिधानाभिधेयव्यवहार इति। अभिधानं शब्दो ऽभिधेयो गम्यः, स च क्वचिद्वाच्यः क्वचिद्भाक्त इति। सुबोधम् ॥ १४ ॥

परीक्षापर्वणः सन्निधानात्तदर्थं लक्षणपर्वण्यपि योग्यायै ? सूत्रकारः छललक्षणं परीक्षते।

वाक्छ-न् ( सू. १५ ) ॥ स्थान्यर्थो गुणशब्दो यो वस्तुतः स एव प्रधानशब्दः स्थानार्थ इति कल्पयित्वेति

योजना । यथा वाक्छले नवीनार्थो नवशब्दः सङ्ख्याभेदे क-ल्पितस्तथेहापीति पूर्वपक्षः ॥१५॥

सिद्धान्तसूत्रम् ।

न त–त् (सू. १६) ॥ तस्योपचारच्छलेऽर्थसद्भावप्रति-षेधस्यार्थान्तरकल्पनातः वाक्छलादित्यर्थः ।

सूत्रतात्पर्यमाह वार्तिककारः । अविशेषादित्यस्ये-ति । ( १७८ । ७ ) विधेयं वस्तु । मञ्चाः क्रोशन्ती-त्यत्र क्रोशनं विधीयते । मञ्चा इति त्वनूद्यते । अत एव गुणे त्वन्याय्यकल्पनेति मञ्चा इत्येतदप्रधानमनूद्यतया भा-क्तं न तु क्रोशन्तीति, न विधौ परः शब्दार्थ इति न्या-यात् । तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते नैव मञ्चाः क्रोशन्तीति च्छलवाक्येन । नवकम्बलो देवदत्त इति वा-क्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते । तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते । किं तु त-देकदेशस्यानेकताया इति महान् भेद इति सिद्धान्तः ॥ १६ ॥

अवि–ङ्गः ( सू. १७ ) ॥ किञ्चित्साधर्म्याश्रित्वाभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः । ओमिति ब्रुवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्गः । भाष्यवार्त्तिके अतिरोहितार्थे ॥ १७ ॥

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह भाष्यकारः । अतः छललक्षणादूर्ध्वम् ।

साध–तिः ( सू. १८ ) ॥ प्रतीपमवस्थानं प्रत्यवस्थानं तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्गोऽत उक्तं साधर्म्यवैधर्म्याभ्यामिति । न च च्छले साधर्म्यवैधर्म्ये स्तः, न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रादपि तु प्रयो(गा)जकादिति । प्रयुक्ते हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरिति । जल्पे

हि वेदप्रामाण्यं विद्वांसं प्रति कुहेतुना यदा नास्तिकैराधिक्षिप्यते सदुत्तरं चास्य यदा सहसा न प्रतिभाति तदेश्वराणां माभूद्वेदाप्रामाण्यबुद्धिरिति जात्याऽपि प्रत्यवस्थेयम्। अन्यथेश्वरचरितानुवर्त्तिनीनां प्रजानां विप्लवो भवेदिति। क्वचित्पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः सम्भवति। जायमानोऽर्थ इति जातिपदव्युत्पत्तिनिमित्तं दर्शितम्।

तदेतद्वार्त्तिककारो व्याचष्टे। साधर्म्येणेति (१७९। ३) यथा पक्षे सति प्रतिपक्ष एवं स्थापनायां सत्यां प्रत्यवस्थानमिति। सूत्रार्थस्तु यथाश्रुति न पुनरुदाहरणसाधर्म्येण यथाभाष्यं बोद्धव्यः। यद्येवं, भाष्यं तर्हि कथमित्यत आह। उदाहरणार्थमिति। एवं वैधर्म्येण वेत्यतदपि यथाश्रुति, न पुनर्यथाभाष्यमुदाहरणार्थं तदित्यर्थः। अस्य व्याख्यानस्य गुणाभिधानेन प्रश्नपूर्वकं प्रपञ्चमाह। किमर्थमिदमिति॥ १८॥

विप्र—नम (सू. १९)॥ सूक्ष्मविषया प्रतिपत्तिर्विपरीता। स्थूलविषया च कुत्सिता। कथमसौ निग्रहस्थानमित्यत आह। विप्रतिपद्यमान इति। अप्रतिपत्तिमाह। आरम्भविषय इति। लाघवाय विप्रतिपत्त्यप्रतिपत्ती इति वक्तव्ये कस्मादसमासकरणमित्यत आह। असमासाच्चेति। विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम जल्पे निग्रहस्थानमस्ति, तदपि ग्रन्थाधिक्येनावरुध्यत इत्यर्थः।

आरम्भविषये अनारम्भ इत्यादि भाष्यं, तद्व्याचष्टे। स्वपरार्थोक्तेराऽसंप्रतिपत्तिरिति। द्वेधा खल्वारम्भविषयेऽनारम्भो भवति। दूष्यं वा परोक्तं साधनं प्रतिषेधहेतुं वा न प्रतिपद्यते। सेयं स्वपरार्थोक्तेराऽसंप्रतिप-

त्तिः उत्तरग्रहणं साधनमप्युपलक्षयति, स्वार्थोत्तराऽप्रतिपत्ति-स्तु साधनप्रतिषेधहेतू परकीयौ प्रतिपद्य तत् प्रतिषेद्धुं स्वकीय-मुत्तरं न प्रतिपद्यते इत्यर्थः । चोदयति, स्वयं प्रयुक्ते वस्तुतः समर्थे साधने कथम् अप्रतिपत्तिर्विप्रतिपत्तिर्वेति द्रष्टव्यम् । प-रिहरति । तदाऽपीति । समर्थसाधनज्ञानं साधनप्रतिपत्तिर्न साधनमात्रज्ञानमित्यर्थः ॥ १९ ॥

सूत्रान्तरमवतारयितुं भाष्यकार आह । किं पुनरिति । यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथाऽपि लक्षणा-भेदाभिप्रायेणाभेद उक्तः ।

तद्वि-त्वम् ( सू. २० ) ॥ नानाकल्प इति स्वरूपतः । विविध इति प्रकारतः । यथालक्षणमिति यथास्वरूपमित्यर्थः ।

अध्यायार्थं संक्षिप्याह वार्त्तिककारः । तन्त्रप्रतिज्ञेति । तन्त्रस्य शास्त्रस्य प्रतिज्ञा प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधि-गम इति सूत्रं, शास्त्रमेव हि तत्त्वज्ञानमिति । संसारो दुःखज-न्मप्रवृत्तिदोषमिथ्याज्ञानानामिति । तन्निवृत्तिश्च संविदा उत्त-रोत्तरापाये तदनन्तराभावादपवर्ग इति । तस्माद्यः प्रमाणा-दिसूत्रेणोद्देशः तत्परिकरो द्वितीयं सूत्रं, द्वाभ्यामुद्देशः, शेषं सुबोधमिति ॥

**इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकता-त्पर्यटीकायां प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ।**

**समाप्तश्चायं प्रथमो ऽध्यायः ॥**

---

१ अ० १ आ० ४१ सूत्राणि । २ आ० २० सूत्राणि मिलित्वा ६१ सूत्राणि १ आ० प्रकरणानि । २ आ० ४ प्रक-रणानि मिलित्वा ११ प्रकरणानि ।

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
२४
न्यायविभागे (३) तृतीयपुष्पम् ।

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# न्यायवार्तिकतात्पर्यटीकायाः

द्वितीयतृतीयचतुर्थपञ्चमाध्यायाः—द्वितीयो भागः ।

---

काशीस्थश्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयाध्यापकेन
न्यायाचार्यपं० श्रीराजेश्वरशास्त्रिद्राविडेन संशोधितः ।

---

काश्यां—
चौखम्बासंस्कृतग्रन्थमालाप्रकाशक-श्रीयुतहरिदासगुप्तात्मज-
श्रेष्ठिजयकृष्णदासगुप्तमहाशयेन स्वकीये 'विद्याविलास'
नाम्नि यन्त्रालये मुद्रयित्वा प्रकाशिता ।

१९८३

KASHI-SANSKRIT-SERIES

( HARIDAS SANSKRIT GRANTHAMALA )

24

Nyāya Section No. 3

# NYĀYAVĀRTIK TĀTPARYA ṬĪKA

BY

ŚRĪ VĀCHASPATI MIŚRA.

*Vol. II Containing 2nd, 3rd, 4th & 5th Adhyayas.*

EDITED BY

*Nyāyāchārya*

*Pandit Śri Rājeśwar Śastri Drāvid.*

Professor,

SRI VALLABHRAM SALIGRAM SANGA-

VEDA VIDYALAYA, BENARES.

Printed-Published and sold by

JAI KRISHNA DAS-HARI DAS GUPTA,

THE CHOWKHAMBA SANSKRIT SERIES OFFICE.

Vidya Vilas Press,

North of Gopal Mandir, Benares City.

1926.

Agents:

1 Luzac & co, Booksellers,
LONDON

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

॥ श्रीगुरुः शरणम् ॥

# न्यायवार्तिकतात्पर्यटीकाया भूमिका।

अथ तमेवविदित्वाऽतिमृत्युमेति नान्यः पन्था अयनायविद्यते
तमेवं विद्वानमृतइहभवतीत्यादिश्रुतिभिरात्मतत्त्वज्ञानमेव निःश्रेय-
ससाधनं नेतरदिति सर्वतन्त्रसिद्धान्तः। तच्चात्मतत्त्वज्ञानं प्रमाणप्र-
मेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा-
हेत्वाभासच्छलजातिनिग्रहस्थानान्तानां षोडशपदार्थानां तत्त्वज्ञाना-
धीनम्। यावदेतेषां तत्त्वं नैव सुपरिज्ञातं भवेत् तावदात्मतत्त्वं नैव
ज्ञातं स्यात्किं बहुना यस्यकस्यापि पदार्थस्य तत्त्वमेव विविक्तरूपेण दु-
रधिगमं भवेदतः सिद्धं मुमुक्षूणामात्मतत्त्वं जिज्ञासमानानां षोडश-
पदार्थतत्त्वज्ञानमावश्यकमिति तन्निरूपणाय भगवान्महर्षिर्गौतमः
पञ्चाध्यायात्मकं न्यायशास्त्रं प्रणिनाय। यत्र प्रथमेऽध्याये पदार्थानामु-
द्देशो लक्षणं प्रसङ्गाच्छलपरीक्षा द्वितीयेऽध्याये प्रमाणपरीक्षा तृती-
येऽध्याये आत्मादिप्रमेयषट्कपरीक्षा चतुर्थेऽध्याये उत्तरप्रमेयषट्क-
परीक्षा तत्त्वज्ञानपरीक्षा पञ्चमे जातिपरीक्षासहितजातिनिग्रहस्था-
नविशेषलक्षणमित्यादयः पदार्था निरूपिताः। अत्र प्रत्येकमध्याये
आन्हिकद्वयमितिसम्भूय दशान्हिकानि चतुरशीतिप्रकरणानि च
सन्ति। यैरात्मतत्त्वज्ञानायान्यस्य कस्यापिदार्थस्य तत्त्वज्ञानाय याव-
त्किञ्चिदपेक्षितं तत्सर्वं निरूपितमिति सर्वेषां दर्शनानामिदमुपजीव्य-
मेतच्छास्त्रप्रतिपादितां शैलीमवलम्ब्यैवेतरैरपिशास्त्रकारैः स्वपक्षसा-
धनस्य कृतत्वात्। अतएवाहभाष्यकारः वात्स्यायनामहर्षिः-सेयमा-
न्वीक्षिकी प्रमाणादिभिर्विभज्यमाना प्रदीपः सर्वविद्यानामुपायः सर्व-
कर्मणाम्। आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तितेतिसर्वेषजीव्य-
त्वमाह। अतएव चेदं शास्त्रमितरेभ्यः प्राचीनमित्यपि असंशयं व-
क्तुं शक्यम्, अन्यथेतरेषां दर्शनानां प्रवृत्तिरेव दुर्घटा स्यात् अत
एव मनुरपि तत्र तत्र यस्तर्केणानुसन्धत्ते सधर्मं वेदनेतरइति प्र-
त्यक्षमनुमानं च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्म-
शुद्धिमभीप्सता इत्यादिना महर्ष्युपदिष्टस्यशास्त्रस्य धर्मतत्त्वशुद्धये
ज्ञातव्यत्वमभिहितवान्। किं बहुना भगवत्पूज्यपादाः श्रीशङ्कराचा-
र्या अपितत्रतत्रैतस्य शास्त्रस्यात्यादरं प्रदर्शयन्तिस्म! तदेवंवि-
धमपि सर्वोपकारकं मुमुक्षूणामत्युपादेयं परमर्षिप्रणीतं शास्त्रं परमग-
म्भीरमनायासेन दुरवबोधमनेकैरर्वाचीनैर्दुष्टव्याख्यानादिभिर्व्याकु-
लीकृतमिति तस्य तद्दोषपरिहाराय भाष्यलक्षणाक्रान्तं भाष्यं श्रीम-

नवान् वात्स्यायनोमहर्षिर्विरचितवान् यत्राऽस्येनसूत्राणां भावाव·
बोधो भवति । तदपि भाष्यमत्यन्तंसङ्क्षिप्तमिति तद्विवर·
णायोद्योतकराचार्यो न्यायवार्तिकमिति निबन्धं सर्वोत्कृष्टं प्र·
णिनाय । यत्रभाष्यव्याख्याच्छलेनबौद्धमतं सम्यङ्निरूप्यानेक·
धाखण्डितम् । भाष्योपरिबौद्धानामाक्रमणं निरसितुमेव वार्तिकं नि·
मितमिति यदक्षपादः प्रवरोमुनीनां शमायशास्त्रं जगतोजगाद । कु·
तार्किकाज्ञाननिवृत्तिहेतुः करिष्यतेतस्य मयानिबन्ध इति वार्तिकस्य
प्रथमश्लोकेन ज्ञायते । एतद्वार्तिकंच सर्वेषामेव नैयायिकानां परमा·
वलम्बनं प्रामणिकत्वेनादरस्थानमिति उदयनाचार्यादिभिर्निरूपितम्
परमेतस्यापि वार्तिकस्य याथातथ्येनभावावबोधोदुरधिगमोमन्द·
प्रज्ञानाम् । भाष्यस्य चाक्लिष्टस्थलेषुभावानां न वार्तिककृतापि समीचीन·
या सरण्या विवरणं कृतमिति सर्वतन्त्रस्वतन्त्रः षड्दर्शनटीकाकृद्वा·
चस्पतिमिश्रोन्यायवार्तिकतात्पर्यटीकानामकं व्याख्यानं प्रणीतवान् ।
यदवलोकनेन भाष्याक्षराणां तात्पर्यज्ञानमनायासेन भवति । एतट्टीका·
तः प्राग्भाष्यमसंलग्नमेवासीदित्यपि नासम्भावितम् । अस्यचमाहा·
त्म्यं सर्वविदितमेव, केनामपण्डितास्तादृशाभवेयुर्येस्याचार्यस्य
लोकोत्तरविद्यासम्पदाऽन्वर्थनाम न जानीयुः अनेनाहिसर्वेष्वेवशास्त्रेषु·
व्याख्यानं प्रणीतं यच्चशास्त्रं व्याख्यातुमारब्धं तदातन्मयेनैवतच्छा·
स्त्रं व्याख्यातमित्ययं विशेषोऽन्यव्याख्यात्रन्तरेभ्योऽस्य, यथा न्यायवार्ति·
कतात्पर्यटीकापरिशीलनावेत्थमनुभवोभवतिनायं वेदान्तीकिन्तुनै·
यायिकः भामतीपरिशीलनसमयेत्वित्थमनुभवोजायते नायं नैया·
कोपितुवेदान्ती, एवंविधं निरङ्कुशंसर्वतन्त्रस्वतन्त्रत्वं नान्यस्य । ता·
त्पर्यटीकायाव्याख्यातारश्चश्रीमन्तउदयनाचार्या आरम्भएव'मातः स
रस्वति' 'तथाभवसावधानावाचस्पतेर्वचसिनस्खलतोयथैते' इ यने–
नास्याचार्यस्यवचसिमहान्तमादरंदर्शयाम्बभूवुः एवं प्रायः सर्वै·
रेवदर्शनान्वष्णातैः पण्डितैः स्वीयग्रन्थेषुसमादरएतस्यकृत इति नैत
दस्माभिः पृथग्वक्तव्यमवशिष्यते । तदिदंन्यायवार्तिकव्याख्यानं पू·
र्वकाश्यांमुद्रितमपि सम्प्रति दुर्लभमनेकेषुस्थलेषुबहुशुद्धियुक्तमिति
संशोध्यपुनर्मुद्रणं विधातुकामेनप्राचीनग्रन्थप्रकाशनरसिकेनश्रीयुत·
जयकृष्णदासगुप्तेनास्मदभ्यर्थितोऽहं पूर्वमुद्रितं पुस्तकं तथालिखि·
तानिचपुस्तकानिएशियाटिकसोसाइटीसमितितो लब्धानि स·
मादाय प्रायशोन्यायवार्तिकतात्पर्यपरिशुद्ध्यातद्व्याख्यानन्यायनिब·
न्धप्रकाशेनचबहुषुस्थलेषुसंवाद्यपाठभेदांश्निर्धार्य महतापरिश्रमेण
संशोध्य मुद्रयित्वा प्रकाशयितुमुपक्रान्तवान् परन्तु श्रेयांसिबहुवि·
घ्नानि इति न्यायेन नानाविधकार्यव्यग्रतयाशीघ्रतयामुद्रणकार्येऽप्र·

वृत्तेतद्दिदृक्षाकुलितमनसां विदुषां कृते प्रथमाध्यायान्तमेकंखण्डं
पृथक्कृत्यमुद्रयित्वापूर्वं प्रकाश्यसम्प्रतिद्वितीयाध्यायमारभ्यसम्पूर्ण-
मुद्रयित्वाप्रकाश्यते । अत्रचशीघ्रतयाप्रतीकलाभार्थं अनेनैवगुप्तम-
हाशयेनपूर्वंमुद्रितन्यायवार्तिकपुस्तकस्थपृष्ठपङ्क्त्यङ्कास्तस्मिंस्तस्मिन्प्र-
तीकसन्निधौमिवेश्यस्थूलाक्षरैः प्रतीकानिस्थापितानि प्रतिपृष्ठं सू-
त्राध्यायाह्निकप्रकरणसङ्ख्याः पृष्ठगताश्चविषयाउपरिस्थूलाक्षरैःस्था
पितायेनपाठकानामनायासेनतेषां २ विषयाणां तत्तदध्यायस्थ-
त्वं ज्ञातं भवेत् । आह्निकान्तेऽध्यायान्तेच सूत्राह्निकप्रकरणसङ्ख्याः
सम्भूयसन्निवेशिताः विषयसूचीपत्रंचनिर्मायपृथक्स्थापितम् । एवं
महतापरिश्रमेण कृतेऽपि मुद्रणे प्रमाददृष्टिदोषेण सीसकाक्षरयो-
जकदोषेणवा बहूनि स्खलितानि स्युरिति सम्भाव्यते तदर्थं विद्वांसोनि-
वेदन्तेयत्पठनपाठनावसरे एवंविधानिस्खलितानिदृष्टानिसर्वाण्ये-
कीकृत्यमह्यं प्रदर्शयेयुस्तर्हिपुनर्मुद्रणावसरेतेषांपरिशोधनं कर्तुम-
हत्साहाय्यं लब्धं स्यात् । श्रीयुतजयकृष्णदासगुप्तेनगौतमसूत्रंवा-
त्स्यायनभाष्यसहितं विश्वनाथवृत्तिमाहृतं पृथङ्मुद्राप्यन्यायवार्ति-
कंमुद्रापितम् इदानींतात्पर्यटीकापि मुद्रापिता अनेन न्यायशास्त्रस्य
सैवैव व्याख्यानपरम्परा प्राकाश्यमुपगता । तात्पर्यटीकायाश्चव्या-
ख्यानं तात्पर्यपरिशुद्धिनामकं न्यायनिबन्धप्रकाशसहितं कलिका-
तानगर्यांमुद्र्यतएवेति सम्पूर्णन्यायशास्त्रस्योद्धारः कृत इति याव-
न्तोधन्यवादाः प्रदेयास्तेसर्वेऽप्यल्पाएवेतिमन्ये । कोवा सूत्रकारोगौ-
तमोमहर्षिः कोवाभाष्यकारो वात्स्यायनस्तथाद्योतकरश्चन्यायवार्तिक
कारः कोवानस्यस्थितिकालः कुत्रवासीत् तथा वाचस्पतिमि-
श्रश्चेत्यादिकं प्रत्नतत्त्वपण्डितैराधुनिकैर्बहुषुस्थलेषुनिरूपितमिति
न चर्वितचर्वणेन पाठकान्विरक्तीकर्तुमिच्छाम ! केवलं विदुष एतदे-
वप्रार्थयेयदेवंविधमहापरिश्रमसम्पादितपुस्तकमवलोक्य सफलय-
न्तुमामकं परिश्रममास्वादयन्तुवाचस्पतेर्वचसांरसंसमाकलयन्तु च-
न्यायशास्त्रसारं प्रचारयन्तुचसर्वत्राज्ञानान्ध्यनिराकरणपूर्वकंज्ञाना-
लोकमिति मुहुर्मुहुः श्रीपरमेश्वरचरणयोर्निपतन् विरमाम्यनल्पज-
ल्पनादिति विदुषां विधेयः ।

श्रीराजेश्वरशास्त्री द्राविडः
न्यायाचार्यः ।
श्रीवल्लभरामशालिग्रामसाङ्गवेद
विद्यालयाध्यापकः
रामघाट काशी ।

सं० १९८३
ज्येष्ठ शुक्ल १५ पूर्णिमायाम् ।

श्रीगुरुः शरणम् ।

## न्यायवार्त्तिकतात्पर्यटीकायां द्वितीयाध्यायादारभ्यान्तं प्रतिपादितानां विषयाणां

# सूचीपत्रम् ।

समाप्तं विषयसूचीपत्रम् ।

# द्वितीयोऽध्यायः ।

---:o:---

अत ऊर्ध्वं प्रमाणादिपरीक्षेत्यादिभाष्यनिराकरणीयामाशङ्कामाह वार्तिककारः. त्रिविधा चास्येति । ( १८ १ । ४ ) स्थानवतां क्रमवतां परीक्षावचनमिति प्रमाणमेव परीक्ष्यत इति युक्तमिति । किमत्रादौ प्रमाणं न परीक्षितं, किं तु संशय एव परीक्ष्यत इत्याह । तानि विलङ्घ्येति । सोऽयं क्रमभेदः कुत इति भाष्यार्थमाह । परीक्षाङ्गत्वादिति । उद्देशक्रमानुरोधेन हि प्रमाणं पूर्वं लक्षितं, न तु लक्षणे संशयस्यास्ति कश्चिदुपयोगः । परीक्षा तु सर्वा विमर्षकरणिकेति परीक्षापर्वाणि सर्वथाऽऽर्थक्रमेण संशयस्य पूर्वभावः । यथाऽग्निहोत्रं जुहोति यवागूं पचतीत्यत्राग्निहोत्रात्प्राग्भावो यवागूपाकस्य, तस्याग्निहोत्रसाधनत्वात् । संशयलक्षणं चात्र परीक्ष्यते न संशय इति नानवस्थाऽपि । देशयति । ननु चोक्तमिति । शास्त्रगता त्वियं परीक्षा, सा च न विमर्शपूर्वेत्यार्थक्रमाभावान्नोद्देशक्रमो बाधनीय इत्यर्थः । परिहरति सत्यं न निर्णये नियम इति । न निर्णयः सर्वः संशयपूर्वः, विचारः सर्व एव संशयपूर्वः, शास्त्रवादयोश्चास्ति विचार इति तेनापि संशयपूर्वेण भवितव्यम् । शिष्ययोश्च वादिप्रतिवादिनोः शास्त्रे विमर्शाभावो न शिष्यमाणयोः, तस्मादस्ति शास्त्रेऽपि विमर्शपूर्वो विचार इति सिद्धम् । संशीतिरिति संशयस्य निरुक्तम् । ( १८ २ । २ ) नावधारयतीत्यर्थः । ननु यथा लक्षणार्थः पूर्वनिरूपितस्तथा निर्बीजः

र्थः। माभूद्वर्णोपलब्धिर्वर्णविकारेण साक्षात्संबद्धा आदेशविरोधिनया तु तन्निवृत्त्या पारिशेष्याद्विकारं साधयिष्यतीत्यत आह। न च वर्णोपलब्धिरिति ॥ ५१ ॥

तदेवं जात्युत्तरमुत्थितमेव मारितं कृत्वा भाष्यकारो ऽत्रैवार्थे सूत्रं पठति। विकारधर्मित्वइति। वार्तिकम् उपलभ्यमानस्य चेकारस्य यत्वानुपपत्तेरिति। (३०९। १७) अवगृह्य चिरं स्थित्वा संधाय यदा यत्वं तदोपलभ्यमानतेकारस्य नास्तीत्यर्थः ॥ ५२ ॥

इतश्च वर्णविकारानुपपत्तिः। प्रकृत्यनियमादिति। क्षीरजातीयस्य दधिजातीयो विकारो न पुनः कदा चिदपि दधिजातीयस्य क्षीरजातीया विकारा उपलभ्यन्ते। इह तु यथेकारजातीयस्य यकारजातीयो विकारो दध्यत्रेति दृश्यते एवं यकारजातीयस्यापि विकार इकारजातीयो दृश्यते यथा व्यथेः मति प्रसारणे यकारस्येकार इति। तस्मादनियमान्न प्रकृतिविकारभाव इत्यर्थः ॥५३॥

अत्र च्छलवादी प्रत्यवतिष्ठते। अनियमे नियमादिति ॥ ५४ ॥

तदेतस्य वाक्छलत्वमापादयति। नियमानियमविरोधादिति। नियमानियमसामानाधिकरण्यं विरुध्यते न त्वाधाराधेयभाव इत्यर्थः ॥५५॥

तदेवं प्रकृतिविकारभावं निराकृत्य विकारवचनव्यक्तिं शब्दानामादेशपक्षे समर्थयति। न चेयं वर्णविकारोपपत्तिरिति। प्रकृत्याप्रयोगे अन्यस्य प्रयोगो विकार इति सामान्यलक्षणम्। तस्य विशेषानाह। स भिद्यतइति। उपमर्दो नामेति। यथा ऽस्तेर्भूरिति। लेशः स्त इत्यत्रास्तेरकारलोपे स-

कारमात्रस्य लेशस्यैकदेशस्य व्यवस्थापनम् । श्लेष आगमः प्रकृतेः प्रत्ययस्य वा । अत्रापि केवलस्याप्रयोगे विशिष्टस्य प्रयोग इत्येतावता विकारसामान्यलक्षणं लक्षणीयम् । एतेन वार्तिकमपि व्याख्यातमेवेति ॥ ५६ ॥

तदेवमुक्तेन क्रमेण वर्णानामनित्यतां प्रतिपाद्य शब्दप्रामाण्योपयोगि पदं निरूपयति ।

ते वि--दम् ( सू. ५७ ) ॥ एवं किल केचित्पश्यन्ति न वर्णाः प्रतिपादयन्त्यर्थान् ते हि प्रत्येकं वा अन्वयधियमादधीरन् नागदन्ता इव शिक्यालम्बनं मिलिता वा ग्रावाण इव पिठरधारणम् । तत्र न तावत्पूर्वः कल्पः । प्रत्येकमर्थप्रत्ययानुत्पादात् । वर्णान्तरोच्चारणानर्थक्याच्च । नापि संहताः एकवक्तृप्रयोगे क्रमनियमेन संघातानुपपत्तेः । अनेककर्तृकप्रयोगे ऽपि सत्यपि यौगपद्ये अर्थप्रत्ययानुत्पादनात् । नापि क्रमवत्पूर्ववर्णानुभवभावितसंस्कारसहितो ऽन्त्यवर्णप्रत्ययो ऽर्थप्रत्ययहेतुरिति सांप्रतम् । भावनापरनाम्नः संस्कारस्य स्वोत्पादकानुभवविषयस्मृतिजननादन्यत्र सामर्थ्यादर्शनात् । न हि गवानुभवजनितः संस्कारः करोति स्मृतिं तुरङ्गमे । अपि चेयमन्त्यवर्णश्रुतिः स्वार्थसंकेतस्मृत्यपेक्षा वार्थप्रत्ययमादधीत अनपेक्षा वा, तदपेक्षत्वे तत्काले अन्त्यवर्णश्रुतिरुपरता क्षणिकत्वेनेति कथा सङ्केतस्मृतिरपेक्ष्यते अन्त्यवर्णश्रुतिसमये च संकेतस्मृतिरनागतेति किमन्त्यवर्णप्रत्ययो ऽपेक्षेत । संकेतस्मृत्यनपेक्षत्वे अगृहीतसंकेतस्यापि प्रथमश्राविणो ऽर्थप्रत्ययप्रसङ्गः । न हि चिरध्वस्तस्यानपेक्षितस्मृतेः संकेतग्रहस्यास्ति कश्चिदुपयोग इति । न च भावनाख्यसंस्कारसहितो ऽन्त्यवर्णः प्रत्यायको ऽर्थस्य । नाप्यन्य एव कश्चित्पूर्ववर्णानुभवजनितः संस्कारः प्रोक्षणादिभिरिव व्रीह्यादेर-

न्त्यवर्णप्रत्ययसहकारीति युक्तम् । अनेकादृष्टकल्पनाप्रसङ्गात् । स एव तावददृष्टचरः कल्पनीयस्तस्य चानेकत्वमिति सो ऽयं वर्णेभ्यो ऽर्थप्रत्ययो भवन्ननुपपद्यमानस्तदतिरिक्तं स्फोटानुभवमायतते । अस्ति हि भिन्नेष्वपि वर्णेषु वाक्यमिदमेकं पदमिति वा सर्वजनीनो ऽनुभवः । न चासौ भिन्नवर्णालम्बनो भवितुमर्हति एकस्य नानात्वविरोधात् । तस्माद्वर्णातिरिक्तं पदं वाक्यं वाऽऽलम्बते । तच्च प्रत्येकमेव ध्वनयो ऽभिव्यञ्जयन्ति केवलं पूर्वे ध्वनयः स्वरूपमाभासयन्ते चरमस्तु व्यक्तम् । न चेयमर्थे विधा संभविनी प्रत्यक्षज्ञाननियतत्वात् व्यक्ताव्यक्तावभासितायाः पदे प्रत्यक्षे उपपत्तिः अर्थस्य तु पदगम्यस्याप्रत्यक्षस्य मानान्तरेण ग्रहणमस्तीति अग्रहणं वा न तु स्फुटास्फुटत्वाभ्यां योगः । अपि च यस्मिन्ननुवर्तमाने यद्व्यावर्तते तत्तस्माद्भिद्यते यथा सुवर्णावयवेष्वनुवर्तमानेषु कटकमुकुटादयः । अनुवर्तमानेषु तु वर्णेषु व्यावर्तन्ते पदभेदास्तस्मात्ते ऽपि वर्णेभ्यो भिन्ना इति तान्प्रत्याह ।

**ते विभक्त्यन्ताः पदम्** । तएव वर्णा एव पदं न तु तदतिरिक्तं स्फोटाख्यमित्यर्थः ।

इदमत्राकूतम् । न तावद्वर्णातिरिक्तः पदात्मा कश्चिदुपलभ्यते प्रत्यक्षेण, पदमिति तु व्यपदेशस्तानेव वर्णान् बहूनप्येकस्मृतिसमारोहितया वा एकार्थधीहेतुतया वा अभिन्नकारकावस्थावत्तया वाऽऽलम्बते भाक्तः । न चैवमन्योन्यसंश्रयः नर्ते पदावधारणादर्थाधिगमो न चार्थाधिगमन्तरेण पदावधारणमिति । एकस्मृतिबुद्धिसमारोहिणां वर्णानामसत्यर्थवत्तया ऽवबोधे सुज्ञानत्वात् तन्मात्रस्य च स्वार्थेन संकेतग्रहस्यापि सुकरत्वात् तदुत्तरकालत्वाच्च पदमिति कारकशब्दप्रवृत्तेः । इतरथा सर्वेषु कारकशब्देषु दुर्वारमितरेतराश्रयत्वं कार्योपहितमर्यादत्वात्कारकाणां तदनु-

पातित्वाच्च तच्छब्दानां, तस्माद्व्यपदेशमात्रानुरोधेन नैकैकवर्णमात्रावभासिनीषु श्रोत्रजासु बुद्धिषु तदाहितवासनालब्धजन्मायां चानुभूतवर्णसंकलनात्मिकायां स्मृतिबुद्धावप्रथमानो वर्णविभागोपमर्देन न शक्यः पदात्मा प्रत्यक्ष इति वक्तुं, नापि निर्भागस्य स्फुटास्फुटत्वे वा भागविपर्यासो वा युज्यते, नो खलु सर्वथा ऽदृश्यमानो नाम स्फुटः नापि समारोपविषयः । न हि सामान्यात्मना ऽप्यगृहीता शुक्ती रजतत्वसमारोपविषयः । न च निर्भागे पदात्मनि गृहीते किं चिदस्यागृहीतमवशिष्यते यदग्रहणादव्यक्तत्वं वा समारोपो वा भवेत् । न च तदेव तदैव तेन गृहीतमगृहीतं च संभवति । तस्मान्न प्रत्यक्षस्य तदाभासस्य वा गोचरः पदात्मा । नाप्यनुमानस्यार्थप्रत्ययलिङ्गजन्मनः परस्पराश्रयप्रसङ्गात् । न तावत्सत्तामात्रेण पदात्मा ऽर्थप्रत्ययमाधत्ते मा धाक्षिस्यत्वेन नित्यमेनम् । तस्मात्स्वज्ञानेन । तच्च स्वज्ञानमर्थप्रत्ययात् तथा च सत्यर्थप्रत्यये पदप्रत्ययः पदप्रत्यये च सत्यर्थप्रत्यय इति व्यक्तमन्योन्याश्रयत्वम् । न चेयमर्थधीर्वर्णेभ्यो नोदेतुमर्हति ते हि पूर्वमनुभूताः प्रत्येकम् अनुभूतताक्रमोपसृष्टा एकबुद्धिसमारोहिणः शक्नुवन्त्यर्थधियमाधातुम् । न चाक्रमानुक्रमविपरीतक्रमाणामविशेषो वर्णानाम् । पूर्वानुभवसन्निवेशानुसारित्वात्स्मृतेः तत्सन्निवेशस्य च विशेषाद्विशेषोपपत्तिः । अभेदे ऽपि च वर्णानां न हि हिनेत्यादौ पदभेद उपपत्स्यते विना ऽपि स्फोटकल्पनाम् । क्रमभेदानुविधायित्वात्पदभेदस्य, अर्थप्रत्ययकारकत्वं च न वर्णमात्राणामपि तु क्रमन्यूनातिरिक्तत्वाद्युपहितानाम् । तत्तदुपधानं च तुल्यत्वे ऽपि वर्णानामन्यदन्यदिति पदभेदसिद्धिः । तस्माद् दृष्टेभ्य एव वर्णेभ्यो दृष्टप्रकारानुपातिभ्यो ऽर्थप्रत्ययोत्पत्तिरुपपद्यमाना नादृष्टं स्फोटात्मानं दृश्यमानवर्णभेदापह्नवेन

कल्पयितुमर्हतीति सिद्धम् ।

**ते विभक्त्यन्ताः पदमिति । यथादर्शनं विकृता इति** भाष्यम् । गुणान्तरापत्त्यादिभिरादर्शरूपेण विकृताः यथादर्शनं यथाप्रमाणं न तु प्रकृतिविकारभावेन तस्य प्रमाणबाधितत्वादित्यर्थः । वार्त्तिकम् अर्थप्रत्ययस्तर्हि न प्राप्नोतीति । स्फोटवादिन उक्तो ऽभिप्रायः । उत्तरम् । अन्त्यवर्णप्रत्ययादिति । वर्णेषु प्रत्ययो वर्णप्रत्ययः । अन्त्यश्चासौ वर्णप्रत्ययश्चेति अन्त्यवर्णप्रत्ययः सकलवर्णावगाहिनी स्मृतिः । सा च प्राचः प्रत्येकवर्णानुभवानपेक्ष्यान्त्या भवति । यद्येवमगृहीतसंकेतानामप्यसावस्तीति तेषामर्थप्रत्ययप्रसङ्गः स्यादित्यत आह । पूर्ववर्णप्रतिसन्धानप्रत्ययापेक्षादिति । संकेतग्रहणसमयः पूर्वः तद्भाविनो वर्णाः पूर्वे तेषां प्रतिसंधानं यावतां यज्जातीयानां गृहीतः संकेतस्तादृशास्तावन्तस्तज्जातीया एवैतइत्येवमाकारं तदेव प्रत्ययस्तदपेक्षात् । न चासावगृहीतसंकेतानामस्तीति सत्यप्यन्त्यवर्णप्रत्ययो नार्थस्य प्रत्यायक इत्यर्थः । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम, अन्तरशब्दो विशेषवचनः क्रियाविशेषयोगाद्धेतोरित्यर्थः ।

एतदुक्तं भवति । यस्याभिधेयं क्रियाविशेषसबन्धेन विना न पर्यवस्यति तन्नाम आख्यातार्थस्तु यद्यपि क चित् क्रियया ऽपि सम्बध्यते यथा ऽग्निकामं जुहोति भुक्त्वा व्रजतीत्यादिषु तथा ऽपि जुहोति व्रजतीत्यादयो न क्रियासम्बन्धमन्तरेण न पर्यवस्यन्ति अपि तु तत्समभिव्याहृता अपि संबध्यन्ते । नामार्थस्तु न पूर्वापरीभूतप्रधानक्रियापदार्थमन्तरेण पर्यवस्यति । अत एवाहुः—यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्यः तथा च ब्राह्मणं ऽग्निकामं भोक्तुं भुक्त्वेत्यादयश्च समुच्चया-

अपेक्षाः क्रियाविशेषमन्तरेणापर्यवस्यन्तो नामत्वेन संगृहीता भवन्ति ।

अस्योदाहरणमाह । यथा ब्राह्मण इति । अस्यार्थमाह क्रियाकारकसमुदायः कारकसंख्याविशिष्टः । अत्र हि क्रियाशब्देन ब्राह्मणस्य भावो ब्राह्मणत्वमभिधीयते भावशब्दस्य क्रियार्थत्वात् । भविता च ब्राह्मणः कारकम् । तयोर्ब्राह्मणत्वब्राह्मणयोः समुदायः स च कारकस्य भवितुर्ब्राह्मणस्यैकत्वसंख्यया विशिष्टो ब्राह्मण इत्येतस्मान्नामपदाद्गम्यत इत्यर्थः । आख्यातलक्षणमाह । क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातं क्रियायाः कालयोगः पूर्वापरीभावः । कालयोगाद्धि संभवति तदभिधायि । तदनेन पाक इत्यादेर्नामपदाद् व्यवच्छिनत्ति । एवमपि भुक्त्वा भोक्तुमित्यादावपि नाम्नि प्रसङ्गः । अस्ति हि तत्रापि कालावधिपूर्वापरीभूतकर्मक्षणप्रचयप्रत्ययो ऽन्यथा ओदनमिति कर्मसम्बन्धो न स्याद् अत उक्तं क्रियाप्रधानमिति । स्वनिष्ठा ह्याख्यातात् क्रिया प्रतीयते नान्यतन्त्रा । भोक्तुमित्यादौ तु क्रियान्तरमन्तरेण न पर्यवस्यन्तीति क्रिया गम्यते । व्रजतीत्यादौ तु न तथा तदिदं क्रियाप्राधान्यम् । तदनेन पचति पचेत पच्यते स्थीयतइत्यादि सर्वमाख्यातं संगृहीतं भवति । न क्वचिदपि नाम्नि प्रसङ्गः यद्व्यस्त्यादि नामाख्यातप्रतिरूपकं तत्रापि सत्त्वित्यस्यार्थे सिद्धरूपे तद्वर्तते न पुनः पूर्वापरीभूतक्रियार्थत्वमिति द्रष्टव्यम् । यस्मान्नाम्ना सर्वं पदं व्याप्यत इति । (३११।६) बाहुल्यं व्याप्त्यर्थः । प्रायेण हि वाक्ये बहूनि नामपदानि आख्यातं पुनरेकमेवैकस्मिन् वाक्ये आख्यातभेदे वाक्यभेदादिति । अधिकरणमाक्षिपति न पदादर्थाधिगतिरिति । पदेन हि विशेषो वा

ऽभिधीयते सामान्यं वा तत्र विशेषाभिधाने तावद् दूषयति । विशेष इति । अनवस्थानमनवधारणमिति । सामान्याभिधानमास्थायाह न पदस्येति । दूषयति न सामान्यस्येति । व्यवहाराय हि वाक्यमुच्चारयन्ति वृद्धाः न तु व्यसनितया । न चास्ति सामान्यसाध्यः कश्चिद्व्यवहारः किं तु सर्वो व्यवहारो विशेषसाध्यः । न चास्य पदं वाचकं तद्वाक्यमेव वाक्यार्थस्य वाचकमिति न पदार्थचिन्तावसर इत्याक्षेपार्थः । समाधत्ते न सामान्यविषयत्वेऽसत्तीति । न तावत्पदातिरिक्तमस्ति वाक्यं नामेत्युक्तमधस्तात् । न च वर्णमालैव पदार्थप्रतिपादनावान्तरव्यापारानपेक्षा वाक्यार्थबोधिनीति युक्तम् । अनपेक्षितसंकेतग्रहायास्तदवबोधनं प्रथमश्राविणो ऽविदितसंकेतस्य वाक्यार्थबोधप्रसङ्गः । यतः संकेतग्रहापेक्षत्वे वाक्यार्थेन सहानन्त्यव्यभिचाराभ्यां वाक्यसंकेतग्रहासंभव इत्यकामेनापि पदानां स्वार्थे संकेतो ऽभ्युपगन्तव्यः । तस्मात्पदानां सामान्यमर्थस्तत्प्रतिपादनावान्तरव्यापाराणां च यथा वाक्यार्थप्रतिपादकत्वं तथा ऽस्माभिस्तत्त्वबिन्दौ निपुणतरमुपपादितम् । सेयं पदात्सामान्यप्रतीतिर्गौरिति वा अश्व इति वा सर्वगवीषु सर्वाश्वेषु वोपसर्पन्ती शुक्ल इति कृष्ण इति वा विशेषश्रुत्या नियम्यत इत्यर्थः । पृच्छति कथं पुनरियमिति । तिष्ठति गच्छतीत्यादयो ऽपि न पदत्वेन विशेषे वर्त्तितुमर्हन्ति सम्बन्धग्रहणासम्भवात् । तस्मादेते ऽपि सामान्यवचना इति भावः । उत्तरं नैवेयमिति ।

तदेवं पदस्य सामान्यवाचकत्वमिश्चयादाकृतिव्यक्त्यो श्च पदात्प्रतीतेर्वादिनां विप्रतिपत्तेर्भवति संशयः । किं स्वित्पदार्थ आहो अन्यतम इति एवं तावत्सामान्यावगपाद्वाचक

त्वं निश्चित्य चिन्तान्तरावतारो दर्शितः। संप्रति द्वितयावगमा-न्वयस्य वाचकत्वशङ्कैव नास्ति तस्मायुक्तश्चिन्तान्तरावतार इ-त्याह भवतु चेति। प्रतीतिसिद्धमनुजानाति क्रिया च त-त्साधनं चेति। भविता गौरित्यर्थः॥ ९७॥

किमन्यतमः पदार्थ उतैतत्सर्वमिति भाष्यम्। तत्रान्य-तमार्थमाह वार्त्तिककारः। किं व्यक्तिरिति।(३।२।९)॥९८॥

अत्र याशब्दादिप्रयोगसामर्थ्याद्व्यक्तिरेव पदार्थ इत्येके म-न्यन्ते। स्यादेतत्। व्यक्तिवदाकृतिरपि भिद्यतइत्याकृतेरप्य-भिधायकं कस्मान्न भवतीत्यत आह। आकृतेरपीति। गोत्वं च जातिरुपाधिर्भविष्यति तेन नातिप्रसङ्गः। न चोपाधेरभिधा-नम्। अनभिहितस्यापि तच्छब्देनोपहितावच्छेदकत्वदर्शनात्। यथा गार्गिकया श्लाघतइत्यत्र श्लाघोपाधिविहितो वुञ् न श्ला-घामाहेति भावः।

तमिमं व्यक्त्यभिधानानियमवादिनमपाकरोति। ना-नेनेति। नाप्रतीत उपाधिरुपहितावच्छेदाय प्रभवति। न च गार्गिकयेत्यत्रोपाधिर्वुञाभिहितोऽपि न प्रतीयते श्लाघत-इति पदान्तरेण तस्याभिधानात्। यत्र तु श्लाघतइति न प्रयु-ज्यते न तत्र वुञोभावाभिधायिनः साधुत्वमस्ति। सेयं व्य-धिकरणेऽनुपायो गतिः। समानाधिकरणे तु पश्चादावुपायौ प्रत्ययान्तशब्दवाच्यत्वमेव। यथा हरितिहरिः हरेति। अत्र हि हरितिहरिरित्येतावतैव पशौ लब्धे तद्विशेषनियमार्थं हरेति प्रयु-ज्यते। न च प्रयोगादेवोपाधेर्गम्यमानत्वादनभिधानं सांप्रतम्। तद्वाच्यनभिधायिनस्तत्र प्रयोगानियमस्य पर्यनुयोज्यत्वात्। अ-ननुयोज्यत्वे अनादेर्लोकप्रयोगस्य सर्वेषामेव शब्दानामनभिधा-यकत्वप्रसङ्गः। प्रयोगनियमादेव हि तेभ्योऽप्यर्थोऽवगम्य-

ते। अथाप्रतिपादकस्य प्रयोगनियमो नोपपद्यतइति यत्र प्रयोगस्तत्प्रतिपादकत्वमित्यभ्युपेयते तदुपाधावपि समानम्। तथा च स्मरति भगवान्कात्यायनः तदन्तवाच्यः समानशब्दोऽयमिति। समानशब्दः समानाधिकरणशब्दो य उपाधिरसौ प्रत्ययान्तशब्दवाच्य इत्यर्थः। तस्माद्व्यक्तिनियमे अप्रतीता जातिरशक्ता। न च गोशब्दादन्यदस्याः प्रत्यायकमस्तीति सा ऽपि तेन प्रत्यायनीयेति सिद्धं न व्यक्तिमात्रं पदार्थ इति॥ ६०॥

कटार्थेषु वीरणेषु व्यूह्यमानेष्विति भाष्यम्। कटं करोतीति निर्वर्त्यस्य कटस्य कर्मत्वमनुपपन्नं कारकाऽधिकारीयत्वात् कर्मसंज्ञायाः, क्रियानिमित्तस्य च कारकत्वात्। असिद्धस्य च क्रियायाः पूर्वं निमित्तभावायोगात्। तस्मात्तादर्थ्यनिमित्तादेव कटशब्दः कटार्थेषु वीरणेषु व्यूह्यमानेषु वर्तते। वीरणानां च वा रच्यमानानामस्ति कटक्रियापूर्वभावित्वेन निमित्तभाव इति॥ ६१॥ ६२॥ ६३॥

यदि न जात्या विना व्यक्तिनियम इति जातिरभिधेया हन्त भोः सा ऽप्याकृत्या नियन्तव्येत्याकृतिरेवाभिधीयतामित्याह। यदि तर्हीति। (३१४।९) एतदपि दूषयति। अत्रापि तदेवोपस्थितं न तदनवस्थानादिति। संस्थानेनापि व्यज्यमाना जातिरेकार्थसमवायाद्व्यज्यते व्यवस्थाप्यते च। सा तु व्यक्तिसंस्थानाभ्यां व्यावर्तमानाभ्यामनुवर्तमाना ऽभिन्नबुद्ध्या ऽवसीयते। तादृशी च व्यक्तिसंस्थानाभिधानानपेक्षेणापि पदेन शक्या बोधयितुं, संस्थानं तु व्यक्तिवाच्यमान-न्त्यव्यभिचाराभ्यामशक्यसंकेतग्रहणं जात्यभिधानमपेक्ष्य न शक्यं पदेन बोधयितुमिति न संस्थानापरनामा ऽऽकृतिः पदार्थ इत्यर्थः। नापि जातिद्वारेण व्यक्तिवदाकृतिः पदार्थो जात्या

सहासम्बन्धादित्याह । यस्य च जात्या योग इति ॥६४॥

अस्तु तर्हि जातिरेव पदार्थः तत्र हि सुकरः संकेतग्रहः व्यभिचाराभावादिति । व्यक्त्याकृत्योस्तु व्यभिचारः जात्यभिधायिनो व्यक्तावाकृतौ चौपचारिकः प्रयोगो भविष्यतीत्यभिप्रायेणाह । अस्तु तर्हीति । शेषमस्यातिरोहितार्थम् ।

एकमनेकत्र वर्त्तमइति प्रतिजानानो नानुयोक्तव्यः । उभयेन व्याघातादिति । (३।८।१३) यद्येकमनेकत्र वर्तमानं प्रतिव्यक्ति सर्वात्मना वर्ततइति किं त्वनेकमनेकत्र वर्ततइति प्राप्तम् । एवं चानुयोगाधिकरणव्याघातः । अथैकमनेकत्र वर्तमानं प्रतिव्यक्त्येकदेशेन वर्त्तते तथा ऽपि नैकमनेकत्र वर्तते । किं त्वनेकमनेकत्रेति एकदेशानामनेकत्वादिति । सो ऽयमुभयेन व्याघातः उक्तो ऽत्रयविवादे ॥६४॥

तदेवमन्यतमाभिधाननियमं निराकृत्यानियमाभिधानं सिद्धान्तमाह ।

व्यक्त्या–र्थः ( सू. ६५ ) ॥ इदमत्राकूतम् । गोशब्दोच्चारणानन्तरं विदितसंगतेरेकपदे व्यक्त्याकृतिजातिनिर्भासः प्रत्यय उदयमासादयति न पुनर्यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गौर्वाहीक इत्यत्र वा गङ्गात्वगोत्वावगमोत्तरकालं वाक्यार्थे तत्सम्बन्धानुपपत्तेस्तदविनाभावेन वा लक्ष्यमाणगुणयोगेन वा तीरं वाहीको वा ऽवगम्यते तथेहावगतिः । प्रयोगप्राचुर्यादसन्ताभ्यासेनातिशीघ्रतया सन्नपि प्रत्ययक्रमो न लक्ष्यते । शीघ्रतरबाणहेतुकशतपत्रशतव्यतिभेदवदिति चेत् । न असति बाधके बलवति प्रत्ययाभेदप्रथायामन्यथाकरणायोगात् । तथा च सति न क चिदप्यभेदो ऽवतिष्ठेत तथा च भेदो ऽपि न स्यात् अभेदाश्रयत्वाद्भेदस्य । अपि च न रूपिशून्या रूपावगतिः

रूपं च द्रव्यस्य जातिः तेन रूप्यमाणत्वाद् रूपि द्रव्यम् । न च येन यद्रूप्यते तदनवगमे तदवगमः । यथा नार्थमन्तरेण बुद्धेरुपलम्भनं, तस्माज्जात्युपलम्भो द्रव्योपलम्भैकदेशो न द्रव्योपलम्भमन्तरेण केवलः सम्भवति । तस्मादेकोपलम्भगोचरत्वाच्च जातिजातिमतोर्लक्ष्यलक्षणभावः स चोपलम्भः शब्दज्ञानानन्तरं जायमानः शाब्दः । न च वाच्यमेकोपलम्भगोचरत्वे ऽपि जातिव्यक्त्योर्जातिरेव वाच्या न व्यक्तिः एकवाच्यत्वे ऽप्युभयोपलम्भोपपत्तावुभयवाच्यत्वकल्पनानुपपत्तेरिति । कार्यव्यङ्ग्यं हि कारणानां सामर्थ्यं कार्यएव नाकार्ये । कार्यं चानुभवः स चैक एवेति न सामर्थ्यभेदकल्पना । तद्द्वारेण तु कर्मण्यप्युच्यते पदमर्थे समर्थमिति कार्यं च द्वारमेकमिति विषयभेदे ऽपि सामर्थ्यमेकमेवेति । अपि च पुरुषसङ्केतापेक्षवृत्तीनां पदानां न किंचित्सामर्थ्यं नाम प्रमाणगोचरः यदेकमनेकं वा स्यात् । एतेन निरूढलक्षणायां शब्दस्य जात्यभिधानोपक्षीणस्य न व्यक्तिसामर्थ्यं कल्पनीयम् । अन्यत्राव्यापृतस्य तत्रार्थस्यैव सामर्थ्यमिति यदाहुस्तदपि निरस्तम् । स खल्वर्थः प्रतीतो वा व्यक्तिं गमयेद् अप्रतीतो वा । अप्रतीतस्य गमकत्वे सर्वदैव व्यक्त्यवगतिप्रसङ्गः कारणस्य नित्यत्वात् । प्रतीतस्य गमकत्वे दुरुत्तरमात्माश्रयत्वं न हि जातिप्रत्ययादन्यो व्यक्तिप्रत्यय इत्युक्तम् । तस्मात्साधु पारमर्षसूत्रं व्यक्त्याकृतिजातयस्तु पदार्थ इति ।

संप्रत्यन्यापोहपदार्थवादिनमुत्थापयति न व्यक्त्याकृतिजातयस्तु पदार्थ इति केचिदिति । ( १२० । ३ ) अथ द्रव्यादिवृत्तित्वादिति । गवाश्वस्य तु नाश्रयाश्रयिभाव इति भावः । जातिमन्मात्राभिधायको ऽपि सच्छब्दो न भवति । कस्मात् अस्वतन्त्रत्वादिति । जातिमन्तो घटप-

ऽन्वयः, न चैवं घटादिशब्दानिव निरपेक्षात्सच्छब्दात्सत्ताबन्ये किं तु सच्छब्दात् घटादिषु बुद्धिः परिप्लवते घटादिशब्दापेक्षस्तु सच्छब्दो घटादिनिश्चयहेतुः । तस्मात् घटादिशब्दपरतन्त्रत्वान्न तद्वतो वाचक इत्यर्थः । अथ चेति । यद्यत्र परतन्त्रं वर्तते तत्तस्य न वाचकं यथा गङ्गागवादिशब्दास्तीरवाहीकादेः । तथा च जातिशब्दा जातिमति । तस्मान्न जातिमद्वाचकाः ते हि जातिमपेक्ष्य जातिमति वर्तन्तइति तादृशं पारतन्त्र्यमित्यर्थः । अथ जात्यनपेक्षं कस्मान्न तद्वति वर्ततइत्यत आह । उक्तं चान्येति । ( ३२१ । ३ ) अस्तु तर्ह्यौपचारिक एव तद्वति प्रत्यय इत्यत आह तद्वति चेति । यथा ऽऽधिपत्यलक्षणो गुणः स्वामिनो जितकाशिनि भृत्ये ऽप्यस्तीति तत्र स्वामिशब्दः प्रवर्तते न तथा जातिगुणयोगो व्यक्तेरित्यर्थः । अपि च अन्यशब्दो ऽन्यत्र वर्तमानः प्रथमं तावदन्यधियमुत्पादयति अथान्यत्र वर्तते यथा गोशब्दो गवि बुद्धिमुत्पाद्य वाहीके वर्तते । न चेह जातिशब्दो जातौ तद्व्यतिक्रमेण प्रवृत्तः न चौपचारिकस्य वृत्तिर्योगपद्यमित्याह । क्रमवृत्त्यभावात् युगपदसंभवाच्च । गुणोपरागं दूषयति । अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च । गुणोपरागाद्यथा नीलः स्फटिक इति ज्ञानमेवं सर्वमेव शाब्दं ज्ञानं विना बाधकमयथार्थमेव स्यादित्यर्थः । एकस्वलक्षणाभिधानं दूषयति । असाधारणेति । अशक्यसमयत्वाच्चेत्यपि द्रष्टव्यम् ।

तदेवमन्यापोहवादिनमुत्थाप्य दूषयति । अत्रास्माभिरिति । व्यक्त्याकृतिजातयस्तिस्रो ऽस्माकं पदार्थः । गुणप्रधानभावस्तु क चिदेव कस्य चित् जातिमद्व्यक्त्यभिधाने द्विविधमप्यस्वातन्त्र्यं न संभवति शब्दानाम् । न तावद्व्यक्तिज्ञाने जनयितव्ये तदर्थं जातिज्ञानं पूर्वमपेक्षन्ते शब्दा इति संभवति । द्वयोरप्येक-

ज्ञानवेद्यत्वनियमेन पौर्वापर्यायोगात् । नापि विशेषवाचकं पदं विना जातिशब्दानां बुद्धिपरिप्लवात्तन्निश्चयाय विशेषशब्दापेक्षया स्वातन्त्र्यम् । स्वविषये जातिशब्दाद्बुद्धेरपरिप्लवात् । जातिमद्व्यक्तिमात्रमस्य हि विषयो न चात्र बुद्धिपरिप्लवः । व्यक्तिनियमस्तु विषय इति न तत्र बुद्धिपरिप्लवो दुष्यति । दूराद्धि आरोहपरिणाहवद्द्रव्यमात्रं गोचरः प्रत्यक्षस्य न तु स्थाणुः पुरुषो वा । न चात्र बुद्धिपरिप्लुतिः प्रत्यक्षक्षतिं कां चनावहति । न चास्मिन् पक्षे जातिशब्दो व्यक्त्याकृत्योः परशब्दो येनौपचारिकः स्यात् । न च सामानाधिकरण्यं न कल्पते जातिव्यक्तिपदयोरेकार्थाभिधायिनोर्वैयधिकरण्यायोगात् । तस्मात्सर्वमवदातम् ।

एवमनेकान्तवादे परोक्तदोषाप्रसङ्गमभिधाय दूषणवाक्यं परोक्तं दूषयन् दोषाभावमाह । न चैते दोषा इति । सत्ताशब्द इति सत्तायाः शब्द इति वा विग्रहः सत्तारूपः शब्द इति वा तत्र पूर्वस्मिन्कल्पे सत्ताया न वाचकः सत्ताशब्द इति व्याघातः । उत्तरस्मिन्कल्पे न वाचकः सत्ताया इत्यनेन व्याघातः सत्ताया इत्यनेन शब्देन सत्तामभिधत्से अथ च तस्य वाचको न सत्ताशब्द इति ब्रूषे ततो व्याघातः सत्ताशब्द इति चोपलक्षणार्थं सत्ताया न वाचक इति द्रष्टव्यम् । शङ्कते भवदभिप्रायेणेति । निराकरोति । नेति । यद्यस्मदभिप्रायार्थं प्रतिपद्यसे अर्थप्रतीत्यधीनो ऽभ्युपगम इति अभ्युपगमं ब्रूषे तत्तथा च न निषेद्धुमर्हसीति भावः । अथ निषेद्धुं प्रत्येमि न पुनरभ्युपैमीत्याशङ्क्याह यच्चेदमिति । ( ३२१ । ४ ) दूषयति तदपि नेति । अतथाभूतस्यापुरुषभूतस्य स्थाणोस्तथाभाविभिः पुरुषैः सामान्यं सत्यध्यारोपितः पुरुषत्वादिर्धर्मो यस्य स तथेत्युक्तः तस्य प्रधानमर्थः पुरुषः तदकारा प्रतीतिरित्यर्थः । सत्तायाः प्रधान-

साधनवाचिनेति । प्रधानं साधनं व्यञ्जकतया भवितृद्रव्यं तद्वाची खलु सच्छब्दः सत्ताशब्दस्तु द्रव्योपसर्जनभाववाची न तस्य द्रव्यवाचिना सामानाधिकरण्यमित्यर्थः । सामानाधिकरण्यासिद्धिः सद्द्रव्यशब्दयोरिति । सिद्धिः प्रतीतिः सा भवन्मते न स्यादिति यदुक्तं कैश्चित्तदप्यनेन सामानाधिकरण्यव्यवस्थापनेन प्रत्युक्तम् । व्याख्यातो निराकार्यत्वेन । स्वयं प्रक्लृप्तां वाचोयुक्तिमिति । ( ३२३।३ ) जातिशब्द इति सदादिशब्देषु स्वयं प्रक्लृप्ता या वचनव्यक्तिस्तां प्रतिषेधति तत्र चास्माकं सिद्धसाधनमित्यर्थः । सच्छब्दो जातिशब्दस्तस्य भेदवाचकत्वं नास्य संमतमिति मन्वानो देशयति । यदि तर्हीति । सुगमः परिहारः । तथाऽपि नान्वयी न व्यतिरेकी चेति । ये ये अनन्ता न ते जातिशब्दवाच्या इति न दृष्टान्तः । सर्वभेदपक्षीकरणात् । नापि यो जातिशब्दवाच्यो न तत्रानन्त्यं यथा गोत्वादिकमिति शक्यं वक्तुं जातेरेव भवन्मते व्योमारविन्दायमानत्वादिति भावः । शङ्कते अथापीति । तथा सत्यन्वयी दृष्टान्तो लक्ष्यत इति भावः । निराकरोति । अयमपि नेति । विशेषणोपादानविरोधात् । न हि भेदमन्तरेण किंचिदस्ति वस्तुसद् यतो विशेषणं व्यावर्त्तयेदिति भावः । हेतुभावानभ्युपगमादिति । ( ३२४।५ ) न शब्दोऽर्थप्रत्यायने लिङ्गं येन व्यभिचारेण दुष्यति । न च प्रत्यायकमात्रं व्यभिचारेण दुष्यति चक्षुरादीनामपि नीलादिव्यभिचारेण पीतादौ वर्त्तमानतया व्यभिचारिणामप्रत्यायकत्वप्रसङ्गात् । सङ्केतग्रहस्तु सत्यपि भेदानां व्यभिचारे चैकैकजातिक्रोडीकृतानां सुकर एवेति भावः । भेदवाचकत्वप्रतिषेधादिति । भेदवाचकत्वे निषिद्धे द्रव्यवाचकत्वं निषिद्धं भवति द्रव्यस्य भेदत्वात् ।

ततश्च द्रव्यशब्द इति व्याघात इत्यर्थः । उक्तोत्तरमेतत् स-च्छब्दद्रव्यशब्दयोरेकविषयत्वादिति । विशेषमात्रं विषयः सदादिशब्दस्य न पुनर्नियतो ऽयमेव नान्य इति भावः * । सत्ताशब्देन द्रव्यगुणकर्माणि नाक्षिप्यन्त इति । सामा-नाधिकरण्ययोग्यतयेत्यर्थः । तदन्तरेण तदनुपपत्तेः । आक्षेप-मात्रं तु शक्यं वक्तुमित्याह । शक्यं वक्तुमिति । पृष्ट्वा सच्छब्दस्य गुणप्रधानभावेन त्रयो ऽर्था इति सूत्रकारन्यायेना-वधारयति । सदिति चायमिति । अर्थकृत इति । अर्थः कार्यं तत्कृतः । एतदुक्तं भवति यस्य कार्येण सम्बन्धस्तत्प्रधानं यस्य कार्यसम्बन्धावच्छेदकत्वं तदङ्गमिति । एतेनेति । (३२५।९) अर्थत्रयाभिधानेन । न हि स्वामिप्रत्ययो भवति भृत्ये । अपि तु तदर्थक्रियाकारितया स्वामिव्यपदेशमात्रमित्यर्थः । नात्र क्रमो न युगपत्प्रत्यय इति । ( ३२६।३ ) भेदाधिष्ठाने क्रम-यौगपद्ये नैकस्मिन् विशिष्टद्रव्यप्रत्यये सम्भवत इति । एतेने-ति । शब्दस्य सत्ताविशिष्टद्रव्यवाचित्वाभिधानेनायथार्थज्ञानोत्प-त्तिप्रसङ्गादिति प्रत्युक्तम् । परमार्थस्वच्छधवले हि स्फटिके नी-लीद्रव्योपधानान्नीलप्रत्ययो भवतु भ्रान्तः तस्य परमार्थतो नीलगुणासमवायात् । सत्तासमवायस्तु द्रव्यादीनां पारमार्थिक इति न द्रव्यादिषु सदिति प्रत्ययस्य मिथ्यात्वमित्यर्थः । न हि कश्चिच्छब्द इति । स्वलक्षणानामशक्यसमयतया न कश्चिदपि शब्दो भवता तद्वाचकत्वेनाभ्युपेयत इत्यर्थः । न च जातिशब्द-स्येति । जातेरभावादिति भावः । न जातिशब्दो भेदानां वाच-कः कस्य तर्हीति पूर्वं भेदान्प्रधानीकृत्योक्तं सम्प्रति तु जा-

* विशेषशब्देन चासौ सामानाधिकरण्येन नियम्यते न तु प्रा-प्यते इति पु० पा० ।

तिशब्दाभिधेयतया अपोह्यत्वम्। नास्ति विवाद इति। (१२७।२० ) अन्यापोहज्ञात्योर्लक्षणाभेदे नास्ति विवाद इत्यर्थः। द्रव्यसच्छब्दयोस्तु सामानाधिकरण्यं न च भेदवाचकाः शब्दा इति व्याहतमिति। ( १२८।४ ) द्रव्यमिति हि विधिरूपमेवं सदित्यपि विधिरूपं तच्छब्दौ तयोर्वाचकौ तयोरन्यापोहार्थत्वं व्याहतं विधिशब्दौ चान्यापोहार्थाविति न सम्भवति। न च भेदानभिधायिनोः सामानाधिकरण्यमपि युज्यते। भिन्नाभ्यां हि निमित्ताभ्यामेकस्मिन्नर्थे भेदरूपे वर्तमानौ समानाधिकरणौ भवेतां भेदं चेन्नाभिधत्तो नैकत्र वर्तेयाताम्। अवर्त्तमानौ च भिन्नप्रवृत्तिनिमित्तपर्यवसितौ गौरश्व इतिवन्न समानाधिकरणौ भवितुमर्हतः। सोऽयमपरो व्याघातः। भेदानभिधानं च सामानाधिकरण्यं चेति। तदनेन व्याघातद्वयमुक्तं तदेतद्व्याघातद्वयं निराचिकीर्षुराशङ्कते। उपचारतो न व्याघात इति चेत्। तदेतद्विभजते द्रव्यसच्छब्दाविति। तदनेन प्रथमो व्याघातः परिहृतः। द्वितीयं व्याघातं शङ्कितं परिहरति। तावेताविति। यतः प्रतिपादयतोऽध्यवस्यत इति यावत्।

एतदत्राकूतम्। विकल्पयोनयो हि शब्दास्तदेवाभिनिविशन्ते यद्विकल्पानां गोचरः। कार्यकारणयोः सामानाधिकरण्येन प्रतिपत्तेः। चतुष्टयी चेयं विकल्पानां सदसद्धर्मिसद्धर्मावगाहिनी जातिः। गौरश्वो नीलं नित्यमित्येवमादीनां न च विकल्पानां गोचरो यो विकल्पते देशकालावस्थाभेदेनैकत्वेनानुसंधीयते तदेवेदमिति। एव च स शब्दगोचरः तत्र शब्दानां शक्यसङ्केतत्वात्। न च स्वलक्षणानि त्रैलोक्यविलक्षणान्येकमिति न विकल्पविषयः। न च सामान्यं नाम किंचिदस्ति

यद्विषयः स्यात् । अत एव न सन्ति स्वलक्षणान्यपि तेषां सामान्यानामभावे तद्वत्तायाः स्वलक्षणेष्वभावात् । अपि चास्तु सामान्यं वस्तुसत् तथाऽपि नित्यत्वादनुपकार्यतया स्वलक्षणाधारत्वानुपपत्तिः आधारत्वमपि हि कारणत्वमेव । पतनधर्माणो हि बदरादयः कुण्डादिभिरपतनधर्माणः क्रियन्ते । न च नित्यं क्रियतइति नाधेयम् । तथा वृक्षत्वशिंशपात्वे स्वतन्त्रे एव सामान्ये स्वशब्दाभ्यामवगमिते न गौरश्व इतिवत्सामानाधिकरण्यं भजेताम् । अपि च भवतु नित्यस्याप्युपकार्यत्वेनाधेयत्वं तथाऽप्येतद्विकल्पनीयम् । किं येनैव स्वभावेन तत्स्वलक्षणं वृक्षत्वमुपकरोति तेनैव शिंशपात्वमपि अथ स्वभावान्तरेण । अथ हि स्वभावान्तरेण स्वभावभेदादन्यत्स्वलक्षणं शिंशपात्वाधारोऽन्यच्च वृक्षत्वाधार इति पुनरपि गौरश्व इतिवत्सामानाधिकरण्याभाव एव । अथैकेन स्वभावेन स्वलक्षणं सर्वसामान्योपकारि तथाऽपि स्वभावाभेदे तदुपकाराधीनस्वभावानां सामान्यानां च मध्ये एकसामान्यवतः स्वलक्षणस्य एकेन शब्देन विकल्पेन वा ग्रहणे सर्वेषां तदेकोपकारनिबद्धस्वभावानां सामान्यानां ग्रहणात्सद्द्रव्यपार्थिववृक्षशिंशपाविकल्पानां शब्दानां च पर्यायत्वप्रसङ्गः । यथा ऽऽह ।

"एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ।
दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रह" इति ।

तस्मान्न सामान्यवद्भेदगोचरा विकल्पाः । स्वलक्षणभेदगोचरत्वनिषेधेन ज्ञानग्राह्याकारगोचरत्वमप्यपास्तम् । स्वाकारमबाह्यं बाह्यमध्यवस्यन् विकल्पः स्वाकारबाह्यविषय इति चेत् । यथा ऽऽह "स्वप्रतिभासेऽनर्थे ऽर्थाध्यवसायेन प्रवृत्ति"रिति । अथ को ऽयमध्यवसायः । किं ग्रहणमाहो स्वि-

त्करणम् उत योजना अथ समारोपः । तत्र स्वप्रतिभासमनर्थमर्थं कथं गृह्णीयात् कुर्याद्वा विकल्पः न हि पीतं नीलं शक्यं ग्रहीतुं कर्तुं वा शिल्पिशतेनापि । नाप्यगृहीतेन स्वलक्षणेन स्वाकारं योजयितुमर्हति विकल्पः । न च स्वलक्षणं विकल्पगोचर इति चोपपादितम् । न च स्वाकारमनर्थमर्थं आरोपयति । न तावदगृहीतः स्वाकारः शक्य आरोपयितुमिति तद्ग्रहणमेषितव्यम् । तत्किं गृहीत्वा आरोपयति अथ यदैव गृह्णाति तदैवारोपयति । न तावत् पूर्वः पक्षः न हि विकल्पज्ञानं क्षणिकं क्रमवन्तौ ग्रहणसमारोपौ कर्तुमर्हति । उत्तरस्मिंस्तु पक्षे विकल्पस्वसम्वेदनप्रत्यक्षा द्विकल्पाकारादहङ्कारास्पदादनहङ्कारास्पदं समारोप्यमाणो विकल्पो नास्वगोचरो न शक्योऽभिन्नः प्रतिपत्तुं नापि बाह्यस्वलक्षणैकत्वेन शक्यः प्रतिपत्तुं विकल्पज्ञानेन स्वलक्षणस्य बाह्यस्याप्रतिभासनात् । तस्मादेष विकल्पविषयो न ज्ञानं न ज्ञानाकारो नापि बाह्य इत्यलीक एवास्थेयः । यथा ऽऽह भदन्तधर्मोत्तरः ।

"बुद्ध्या कल्पिकया विविक्तमपरै
यद्रूपमुल्लिख्यते बुद्धिर्नो न बहिरिति" ।

तथाऽपि विकल्पज्ञानाद्बाह्याभिमुखी प्रवृत्तिस्तदर्थिनां न स्यात् । तस्मादलीकबाह्यमेषां विषयः बाह्यभेदाग्रहश्चास्य बाह्यत्वं न पुनर्बाह्याभेदग्रहः । विकल्पगोचरे बाह्ये तदभेदग्रहस्याशक्यत्वात् । तस्मान्निर्विकल्पकपृष्ठभाविनो विकल्पाः तदुपनीतबाह्यस्वलक्षणभेदं स्वग्राह्यालीकस्याग्रहन्तः तदभिमुखं प्रवर्तयन्ति व्यवहर्तॄनर्थिनः पारंपर्येण तत्सम्बन्धात् प्राप्ते विसम्वादयन्ति लोकम् । तेषां च विकल्पविषयाणां न तैरेव विकल्पैः परस्परतो भेदो गृह्यते नापि विकल्पान्तरैरिति भेदाग्रहादभेदमभिमन्यते पुरुषः तदभे-

दाद्यावमर्षाणाम् अभेदः तदभेदाच्च तद्धेतूनामविकल्पाविषयाणाम- भेदः तदभेदाच्च स्वलक्षणानामविकल्पधीविषयाणामप्यभेदः। यथाऽऽह।

"एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नेति"॥

तत् सिद्धमलीकं बाह्यं विषयो विकल्पानां शब्दानां चेति। तच्चेदमन्यव्यावृत्तिरूपं भावाभावसाधारण्यात्त्वात्य- न्तविलक्षणानां सालक्षण्यापादनाच्च तद्रूप्यानुभवाच्च। तथा हि यद्भावाभावसाधारणं तदन्यव्यावृत्तिरूपमेव। यथा ऽमूर्त्तत्वं तत् खलु विज्ञाने च शशविषाणे च साधारणम्। तथा च विवादाध्यासिता विकल्पविषयाः घटपटादय इति स्व- भावहेतुः। गौरस्ति गौर्नास्तीति हि भावाभावसाधारणो गवादि- विकल्पविषयो विधिरूपस्त्वलक्षणवद्भावासाधारण्ये नास्तीत्यनेन न संबध्यते विरोधात्। अस्तीत्यनेनापि न संबध्यते पौनरु- क्त्यात्। भावाभावसाधारणग्रहणं च नानिमित्तं नाप्यन्यनिमित्तं न हि विधिरूपविषयस्य तत्स्वरूपविषयस्य वा विधिधर्मापाति- नस्तत्र निमित्तभावः संभवति। तस्मान्निमित्तवत्तया साधारण- ग्रहणं व्याप्तं विपक्षान्निमित्तवत्त्वस्य व्यापकस्यानुपलब्ध्या निव- र्त्तमानमन्यव्यावृत्तिविषयत्वेन व्याप्यतइति प्रतिबन्धसिद्धिः। अपि चात्यन्तविलक्षणानां सालक्षण्यम् अन्यव्यावृत्तिकृतमेव। यथा गवाश्वमहिषमातङ्गानामत्यन्तविलक्षणानामपि सिंहव्यावृत्त्या सालक्षण्यम्। तथा च बाह्यस्य स्वलक्षणस्य विधिरूपस्य परमा- र्थसतो ऽपरमार्थसताऽत्यन्तविलक्षणेन सालक्षण्यमिति स्वभाव- हेतुः। बाह्यं हि विधिरूपमप्यगोव्यावृत्तम्। विकल्पविषयोऽपि चेदगोव्यावृत्तस्ततः सालक्षण्यं नान्यथा तथा च सालक्षण्यमपि

निमित्तवत्तया व्याप्तं तदनुपलब्ध्या विपक्षाद्व्यावर्तमानं स्वसाध्येन व्याप्यत इति प्रतिबन्धसिद्धिः । अपि चानुभूयत एव विकल्पविषयो व्यावृत्तिरूपः । तथा हि । तदप्रतिभासने गां बधानेति देशितो ऽश्वं बध्नीयाद् गोरश्वाद् भेदनाप्रतिभासनात् । प्रतिभासे वा कथं नागोव्यावृत्तिप्रतिभासः । तस्मादन्यापोहगोचरौ शब्दविकल्पाविति । तदेतदुक्तम् वार्तिककृता । तावेतावसद्व्यव्युदासरूपेण प्रवर्तमानावेकमर्थमधिकुरुत इति । ( ३।१८८।८ ) एकं स्वलक्षणमध्यवस्यतः अध्यवसायश्च स्वविषयस्य स्वलक्षणाद्भेदेनाग्रह इत्युक्तम् ।

अत्रोच्यते । जातिस्तावदुपपादितसद्भावा तत एव तद्वती व्यक्तिरपि परमार्थसती । स्वाभाविकश्च सम्बन्धो व्यक्तेर्जात्या सह नोपकारमपेक्षते । अपि चानित्यस्याप्युपकार्यता क्षणभङ्गभङ्ग उपपादयिष्यते । यथा चैकोपाधिग्रहे ऽपि नोपाध्यन्तरविशिष्टग्रहस्तथोपपादितं प्रत्यक्षलक्षणावसरे । न चात्यन्तासतः केन चिद्सद्रूपस्य प्रथोपपद्यत इति साङ्ख्यानिमित्तां भ्रान्तिमुपपादयता वार्तिककृतोक्तम् । उपपादितं चास्माभिः । तस्माज्जातिमत्यो व्यक्तयो विकल्पानां शब्दानां च गोचरः तासां तद्वतीनां रूपमतज्जातीयव्यावृत्तमित्यर्थः अतस्तदवगतेर्न गां बधानेति चोदितो ऽश्वादीन् बध्नाति । न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते । सा हि स्वरूपतो नित्या ऽपि देशकालविकीर्णानन्तव्यक्त्याश्रयतया भावाभावसाधारणी भवत्यस्तिनास्तिसम्बन्धयोग्या । वर्तमानव्यक्तिसम्बन्धिता हि जातेरस्तिता अतीतानागतव्यक्तिसम्बन्धिता च नास्तितेति । संदिग्धव्यतिरेकित्वादनैकान्तिकं भावाभावसाधारण्यमन्यथासिद्धं चेति । जातिमती व्यक्तिर्विकल्पगो-

चरो नालीकमिति कस्य वस्तुना सह सादृश्यायान्यव्यावृत्ति-रूपता ऽध्यवसीयते । अपि चालीकस्य समस्तसामर्थ्यविरहिणो ऽत्यन्तविसदृशस्य समर्थेन स्वलक्षणेन विधिरूपेण किं सादृश्यम् । अन्यव्यावृत्तिरिति चेत् । नन्वन्यव्यावृत्तिर्भावकी स्वलक्षणस्य स्वभावो वा अन्यो वा न तत्स्वभावो विधिरूपेण विरोधात् । अविरोधे वा विधिनिषेधयोरेकत्वाद्विधिरूपतानिषेधेनालीकस्य स्वलक्षणसारूप्यायाऽन्यव्यावृत्तिरूपतोपपादनमनर्थकम् । विधिरूपेणातुच्छेन तुच्छस्य सारूप्यमनुपपन्नमिति चेत् । हन्त भोः स्वलक्षणस्यास्ति किं तुच्छमपि रूपं येनालीकस्य तुच्छस्य सारूप्यं स्यात् । तथा सत्ययमेकस्य स्वलक्षणस्य तुच्छातुच्छाविरुद्धस्वभावद्वयसमावेशमभ्युपगच्छन् श्लाघनीयप्रज्ञो देवानांप्रियः । न च स्वलक्षणादन्यव्यावृत्तिरलीकमन्यव्यावृत्तं स्वलक्षणेन सरूपयति तथा सति हस्तिमशकावपि रासभः सरूपयेत्* धर्मो न च स्वलक्षणधर्मो व्यावृत्तिर्भवद्भिरभ्युपेयते ।

स्यादेतत् । अध्यवसीयमानमपि स्वलक्षणं न परमार्थसत्, अपि तु तदपि कल्पितं, तस्मात्तस्य विधिनिषेधरूपता न विरुध्येत, वस्तुनि हि विरुद्धधर्माध्यासो विरुध्यते नावस्तुनि तेनास्य विधिरूपपरित्यागेन निषेधरूपतामुपादायाऽलीकस्य सारूप्यमुपपद्यते । यथाऽऽह—

"यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अप्यन्यव्यावृत्ती न वस्तुन" इति ।

अथालीकस्य स्वलक्षणस्यालीकसादृश्ये किं सिध्यति । न तावत् तत्र प्रवृत्तिः असतः प्रवृत्तिविषयत्वायोगात् । सतस्तु प्रवृत्तिविकल्पस्य न सादृश्यमसता सादृश्ये वा वृथा अली-

* धर्म इति पु० नास्ति ।

कस्वलक्षणाभ्युपगमः । अथ न वयमलीकं स्वलक्षणान्तरमातिष्ठामहे किं त्वलीकस्यैव दाहपाकादिकसामर्थ्यारोपम् । न तत्स्वलक्षणं तस्य सर्वतो व्यावृत्त्या अभिलापसंसर्गायोग्यत्वेन विकल्पज्ञानप्रतिभासाभावात् । अभिलापसंसर्गयोग्यस्य चान्वयिनो ऽस्वलक्षणत्वात् । तस्मात्स्वान्वयिनो ऽन्यव्यावृत्तिरूपस्यासमर्थस्यापि सामर्थ्यं समारोप्य तत्तदर्थिनो व्यवहर्तॄन् प्रवर्त्तन्ते लोकविकल्पाः पारम्पर्येण सम्बन्धात्समर्थं वस्तु प्रापयन्तो न विसंवादयन्ति लोकमिति युक्तमुत्पश्यामः । अथास्य अतदर्थक्रियासामर्थ्यारोपः किं दृष्टार्थक्रियास्वलक्षणसालक्षण्येनाहो स्विदनादिवासनावशात् । तत्र स्वलक्षणेन सर्वतो व्यावृत्तेन समर्थेन समस्तसामर्थ्यविरहिणोऽन्वयिनो न किंचिदस्ति सारूप्यम् । अन्यवृत्त्या तु सारूप्ये विधिरूपेणापि प्रसङ्गः । तस्यास्ततो भेदाभावादित्युक्तम् । अनादिवासनावशात्तु तदारोपे प्रथमदर्शने ऽपि नालिकेरद्वीपागतस्य वह्नौ दाहपाकादिसामर्थ्यज्ञानप्रसङ्गः । वह्निस्वलक्षणाद्दाहपाकादिकारिणो भेदाग्रहादलीकस्य तद्रूपसमारोप इति चेत् । किं स्वलक्षणे गृह्यमाणे अथागृह्यमाणे । न तावद्गृह्यमाणे तस्य विकल्पज्ञानगोचरत्वाभावादित्युक्तम् । तत्समयभावि त्वविकल्पकं तत्त्वं गृह्णदपि न विकल्पे स्वविषयं निवेशयति । तस्य ततो ऽन्यत्वेन तद्वार्त्तानभिज्ञत्वात् । एवं विकल्पज्ञानमपि समनन्तरोत्पन्ननिर्विकल्पकव्यापारपारम्पर्ये ऽपि न स्वलक्षणं गोचरयितुमर्हति । तस्याभिलापसंसर्गयोग्यप्रतिभासविषयत्वादित्युक्तम् । समनन्तरप्रत्ययादविकल्पादुत्पत्तेस्तद्व्यापारपारम्पर्यादतद्गोचरो ऽपि तद्गोचर इवाभासतइति चेत् । अनुभववासनाभावेषु भवेदपीयं गतिर्न तु परोक्षाभावात्तगाहिष्वविद्यावासनाप्रभवेषु संभवति । अ-

पि चानुभववासनाप्रभवस्यापि तद्गोचरत्वाभिमानस्तस्मिन्नप्रथमाने तदुत्पत्तिमात्रान्न भवितुमर्हति। अगृह्यमाणे तु वह्निस्वलक्षणे ततो भेदाग्रहेण तद्रूपारोपे त्रैलोक्यरूपारोपप्रसङ्गो नियमहेतोरभावात्। न हि तदानीमगृह्यमाणतया त्रैलोक्याद्वह्निस्वलक्षणस्य कश्चिद्विशेषः वह्निस्वलक्षणविषयनिर्विकल्पकप्रभवत्वेन तस्मिन्नियमे अविद्यावासनाप्रभवेषु प्रधानेश्वरादिविकल्पेषु तदभाव इति नियमो न स्यात्। न चाग्रहेण तदारोपसंभव इत्युक्तम्। तस्मादलीकस्य बाह्यत्वं विकल्पगोचर इति रिक्तं वचः। अपि च ज्ञानाकारवत्स्वलक्षणवच्चालीकग्राह्यत्वमपि न विकल्पगोचरो भवितुमर्हति। एतद्धि कल्पनाधीनमुत्पन्नायां कल्पनायामुत्पन्नमिव विनष्टायां नष्टमिव विकल्पनाभेदे भिन्नमिव न शक्यमेकत्वेन प्रतिकर्त्तुम्। भेदानवमर्षादिति चेत्। किमस्यानवमृष्टमपि तत्त्वम्। ओमिति चेत्। न तर्हि कल्पितम्। ननु नास्य भेदोऽपि स्वाभाविकः स्वाभाविको हि भेदाभेदाभ्यां युज्यते न त्वलीकम्। मा भूद्भेदोऽस्य स्वाभाविकः कल्पनाधीनं तु तदलीकं तद्भेदाद्भिन्नं प्रतिपत्तव्यम्। अन्यथा तदधीनत्वापत्तेः। इदमेव हि तस्य विकल्पितस्य कल्पनाधीनत्वं यत्कल्पनाभेदाभेदानुविधानं नाम तदधीनत्वे तु कल्पितत्वानुपपत्तेरनलीकत्वप्रसङ्गात्। तन्मा नाम भूतामस्य स्वाभाविके नानात्वैकत्वे न तु भिन्नकल्पनाऽनुपाति शक्यमेकत्वेन प्रतिपत्तुमिति भिन्नं प्रतिपत्तव्यम्। तत्सिद्धं विकल्पागोचरत्वमलीकबाह्यस्य अभिलापसंसर्गायोग्यत्वात्सुखादिस्वलक्षणवदिति। अभिलापसंसर्गायोग्यं हि तत् तेनाशक्यसमयत्वात् सुखादिलक्षणवदिति। शक्यसमयतया खल्वभिलापसंसर्गयोग्यता व्याप्ता अन्यथाऽतिप्रसङ्गात्। सालीकबाह्यतायाः प्रतिविकल्पं भिन्ना-

या व्यावर्त्तमाना ऽभिलापसंसर्गयोग्यत्वमपि व्यावर्त्तयतीति प्रतिबन्धसिद्धिः । अपि चेदमलीकमगोव्यावृत्तिरूपं वा तद्धर्मो वा । अगोव्यावृत्तिरूपं चेत् । न तदसिद्धं गवि शक्यं ग्रहीतुम् । अगौश्च गोनिषेधात्मेति गोसिद्धिमपेक्षतइति दुरुत्तरमितरेतराश्रयत्वं तद्धर्मत्वे वा गोत्वमेवास्तु भाविकं तद्धर्मो विधिरूपः कृतमलीकेनाविधिरूपेण । तद्धर्माणां तद्भाविकत्वसाधनं च निराकृतं तस्य च भावाभावसाधारण्यमुपपादितं तद्विस्तरादिभ्यतो ऽपि बहुतरविस्तरे पतिताः स्म इत्यास्तामेनमास्तिकमानोपमर्दनमिति ।

उपचारतो न व्याघात इति चेदिति शङ्कायाः परिहारवार्त्तिकम् । मुख्यासंभवादिति । (३२८।११) सर्वत्र मुख्यपूर्वक उपचारो वा समारोपो वा दृष्टः तत्र तु राद्धान्ते न विधिर्विषयः कश्चिदस्ति मुख्यः शब्दो वा विकल्पो वा सर्वस्य निवृत्तिगोचरत्वात् । न चाध्यवसेयो विधिः संभवतीत्युपपादितमधस्तादिति भावः । न चान्यापोहपक्ष उपचारो युक्तः उभयोः प्रधानशब्दत्वादिति । न हि सिंहत्वं नाम किं चिदस्ति सिंहव्यक्तिषु यन्माणवके न स्यात् । अपि तु प्रसह्यकारित्वादिव्युदासो माणवके नास्तीति सिंहव्यक्तिष्विव माणवके ऽपि सिंहशब्दो मुख्य एव स्यादित्यर्थः । किं गौरगौरिति । (३२९।५) अश्वादिरित्यर्थः । प्रैष्यप्रत्ययपूर्विका प्रैषस्य प्रैषविषये प्रवृत्तिः संप्रतिपत्तिः अङ्गव्यतिरिक्तस्य चाङ्गिनः सेनावनबहुत्वसंख्यादीनां भवद्भिरभ्युपगमादित्यर्थः । क्रियारूपत्वाच्चापोहस्य विषयो वक्तव्य इति । कर्म विषयः क्रियायास्तद्वक्तव्यमित्यर्थः । कथमन्यविषयादिति । कथमन्यविषयादपोहादगोविषयाद्गवि प्रतिपत्तिरिति । अथागोरिति । (३३०।२) अस्ति हि

का चित् क्रिया या ऽन्यस्यान्यविषया । यथा विज्ञानमात्मनो ऽर्थः विषयं वेत्त्यर्थः । निराकरोति । केन गोरिति । क्रिया हि चेतनानां प्रयत्नपूर्वा भवति । अपोहलक्षणा च क्रिया निषेधरूपा निषेधश्च प्राप्तिपूर्वकः न हि गोरगोत्वं केन चित्प्रसञ्जितं यत्प्रेक्षावता व्यपोह्येतेत्यर्थः । कथं चागवीति । अगवीति पदेन यो ऽयं प्रतिषेधो नासौ गोप्रतिपत्तिमन्तरेण भवतीत्यर्थः । अध्यासानुपपत्तेरर्थप्रत्ययो न युक्त इति । अपोहरूपो ऽर्थप्रत्ययो न युक्त इत्यर्थः । किमपोह्यो वाच्यो ऽथावाच्य इति । अपोहादिशब्देनेत्यर्थः । यदि वाच्य इति । स्वरूपेणैवापोहो वाच्यो न चापोहापोहेनेत्यर्थः । स्यादेतत् । यद्यन्यापोहेन शब्दो न वर्तते कथं तर्हि द्व्यादिविशेषेष्वनेकशब्द एकापोहेन वर्तते । न ह्यत्रानेकत्वं नाम गोत्वमिव किं चिदस्ति सामान्यमित्यत आह । अनेकमिति चास्य पदस्य द्व्यादिविषयत्वात् । (३३१।२) सामान्याधिगतावेकत्ववर्जितसंख्यात्वसामान्याधिगतौ विशेष आश्रयितव्यः संख्यात्वसामान्यमेवैकत्ववर्जितं तत्र द्व्यादिविशेषाधिगतिहेतुर्न पुनरन्यापोहमात्रमित्यर्थः । न ह्यसति सामान्यशब्दादेकत्ववर्जितसंख्यासामान्यवाचकादनेकशब्दाद् विशेषाश्रयणे अन्यापोहमात्राद्विशेषाधिगतिरिति योजनीयम् । अब्राह्मणादिशब्दानामपीयमेव गतिः । तत्रापि पुंस्त्वसामान्यमेव ब्राह्मणशब्दार्थ इति । नीलोत्पलशब्दयोश्च प्रधानत्वादिति । अनीलानुत्पलव्युदासौ हि प्रधानौ नीलोत्पलशब्दावाहतुः न ह्येतयोरस्ति विशेषणविशेष्यभावः परस्परासंबन्धादिति भावः । एतेन नीलोत्पलशब्दयोरस्मिन्सिद्धान्ते प्रधानार्थत्वेन व्युत्पादनेन राजपुरुषशब्दौ व्याख्यातौ प्रधानत्वेन अत्राप्यराजापुरुषव्यवच्छेदयोर्नावच्छेद्या-

वच्छेदकभावः नापि स्वस्वामिभाव इत्यर्थः। समानाधिकरणयोश्चेति। शब्दविकल्पयोः परमार्थसद्वस्तुसंस्पर्शासम्भवादित्यर्थः॥ ६५॥

व्यक्ति-र्तिः (सू. ६६)॥ यत्र हि व्यक्त्याकृतिजातीनां समावेशस्तत्र व्यक्तिनिर्द्धारणायेदं लक्षणम्। तेनाकाशाद्यनवरोधे ऽपि न दोषस्तत्राकृतेरभावादिति भाष्यमतम्। यथा ऽऽह भाष्यकारः न सर्वं द्रव्यं व्यक्तिरिति। यद्यपि गुरुत्वादयः सामान्यगुणास्तथा ऽपि गुणान्तरेभ्यो व्यावर्त्तमाना गुणविशेषा इत्युच्यन्ते। अव्यापिन इति। सर्वगतस्य द्रव्यस्य परिमाणं व्यवच्छिनत्ति। मूर्च्छिताः परस्परं संयुक्ता अवयवा यस्य तन्मूर्च्छितावयवम्। कथं पुनरित्यादिभाष्यमाक्षिपति वार्त्तिककारः। अधिगतत्वादिति। स्वरूपागवमपूर्वकत्वाद्वाक्यप्रतिपादनस्य स्वरूपावगमो ऽपि तन्नान्तरीयकत्वात्सिद्ध इत्याक्षेपाभिप्रायः। निराकरोति। न निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञापनार्थत्वात्। प्रश्नस्य शब्दप्रवृत्तिनिमित्तानां त्रैविध्ये सति तद्विशेष एव विषयः तज्ज्ञापनमर्थः प्रयोजनं यस्य स तथोक्तः। एतदुक्तं भवति सिद्धं कृत्वा भेदमभिधेयत्वं त्रयाणां प्रतिपादितम्। संप्रति स एव भेदः प्रतिपाद्यतइति। सूत्रमिति। बहूनामर्थानां सूचनादिति भावः। अत्रभाष्यव्याख्यानमुपन्यस्यति। व्यज्यतइति। (३३२।२) दूषयति एतत्त्विति। व्यक्तिः पदार्थ इत्येतत् प्रकृतं तत्र यथाऽवयविनो व्यक्तेः पदार्थत्वमेवम् आकाशादीनां चोत्क्षेपणादीनां च तत्तथा लक्षणं व्याख्येयं यथा सर्वं संगृह्यते अन्यथा सूत्रकारो ऽकुशलः स्यात् तदर्थमाह। वयं तु ब्रूम इति। अत्रेदं व्याख्यानम्। व्यक्तिरिति लक्ष्यनिर्देशः शेषं लक्षणम्। गुणविशेषा इति द्वेधा समासः

गुणश्च विशेषश्चेति प्रथमो विग्रहः तेनाकृतिर्निराकृता संगृही ताश्च रूपादयो भवन्ति । तथा ऽप्युत्क्षेपणादिव्यक्तेरसंग्रह इति द्वितीयो विग्रहः । गुणेभ्यो विशेषा गुणविशेषाः गुणेभ्यो व्यावृत्ता उत्क्षेपणादय इति यावत् । तथा ऽपि न द्रव्यं संगृह्यतइ· त्यत आह । आश्रय इति । तच्छब्दाध्याहाराद् गुणविशेषाश्र· यो द्रव्यमित्यर्थः । प्रतिपदमिति । गुण इति च विशेष इति चाऽऽश्रय इति चेति पदानि । अथ वा गुणविशेषाणामाश्रय इति चेति पदानि । अथ वा गुणविशेषाणामाश्रय इति गुणा रूपादयः विशेषाः कर्माणि गुणेभ्य इत्यर्थात् । तेषामाश्रयश्चेति द्वन्द्व एव तेषामित्यर्थाद्गम्यते । तत्र मूर्च्छित इतिमूर्छनं संबन्ध इह चासौ समवाय इति ॥ ६६ ॥

आकृ-ख्या (सू. ६७) ॥ जातिश्च जातिलिङ्गानि च जातिलिङ्गानि तान्याख्यायन्ते यया सा आकृतिः । शिरःपाण्यादिव्यूह आकृतिर्जातिमनुष्यत्वादिकमाचष्टे । शिरोनासिकाकलादीनां व्यूहो मनुष्यत्वजातिलिङ्गं शिर आचष्टे । शिरसा पादेन गामनुमिन्वन्तीति भाष्यम् । यद्यपि गोत्वं प्रत्यक्षमेव नाकृतिव्यङ्ग्यं तथा ऽपि विप्रतिपद्यमानं प्रत्युच्यते अनुमिन्वन्तीति न पुनः सर्वा जातिराकृत्या लिङ्ग्यतइति । मृत्सुवर्णरजतादिका हि रूपविशेषव्यङ्ग्या जातिर्नाकृतिव्यङ्ग्या ब्राह्मणत्वादिजातिस्तु योनिव्यङ्ग्या आज्यतैलादीनां जातिस्तु गन्धेन वा रसेन वा व्यज्यते । अत एव न सार्षपादीनां तैलत्वमस्ति तद्व्यञ्जकयोर्गन्धरसयोरभावात् । भाक्तस्तु तैलशब्दप्रयोगः क्षीरजातिरपि रसव्यङ्ग्यैव अत एवामिक्षायाः क्षीरत्वं न तु वाजिनस्य तद्व्यञ्जकस्य रसभेदस्य वाजिने ऽभावाद् आमिक्षायां च भावादिति ॥ ६७ ॥

समा-तिः (सू. ६८) ॥ प्रसूत इति प्रसवः समानबुद्धे-र्भिन्नेषु प्रसोत्री या जातिः सा ऽवश्यं समानप्रत्ययं प्रसूते न पुन र्या समानप्रत्ययं प्रसूते सा जातिः । पाचकादिषु व्यभिचारा-दिति । व्यक्त्याकृतिभ्यां भेदकत्वमात्रेण चैतल्लक्षणं न तु सर्व-था वेदितव्यम् । यस्तु वैयात्यात्प्रत्यक्षे ऽपि विप्रतिपद्यते तं प्र-त्यनुमानान्याह । गवादिष्वनुवृत्तप्रत्यय इति । (३३३।१८) व्यपदेश इति सम्बन्धिना सम्बन्धान्तरस्य विशेषणं पुरुषो व्य-पदिश्यते राज्ञ इत्यनेनेति । गोर्गोत्वानुवृत्तिप्रत्यया इति । पूर्वमनुवृत्तप्रत्ययमात्रं पक्षीकृतम् इह तु गोर्गोत्वानुवृत्तिप्रत्यय इत्यपौनरुक्त्यम् । कीर्तित इति । यथा लिङ्गं विवक्षितमन्त-रत्वात् । अन्यत्र यथालिङ्गं प्रत्यय इति । नपुंसकमनपुंसकेनेति नपुंसकत्वं नाशङ्कनीयमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्याय-
वार्तिकतात्पर्यटीकायां द्वितीयाध्याय-
स्य द्वितीयमाह्निकम् ।

द्वितीयो ऽध्यायः समाप्तः ॥

२ अ० १ आ० ६९ सूत्राणि । २ आ० ३० सूत्राणि मिलित्वा १३७ सूत्राणि । १ आ० ९ प्रकरणानि० २ आ० ४ प्रकरणानि मिलित्वा १३ प्रकरणानि ।

—❧—

अत्र भाष्यं परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यतइति । वृत्तानुकीर्तनं प्रमेयपरीक्षां वर्तिष्यमाणां प्रति वृत्तायाः प्रमाणपरीक्षाया हेतुभावं दर्शयितुम् । प्रमाणेन हि प्रमेयं परीक्ष्यते नान्येन । न च तदपरीक्षितं प्रमेयपरीक्षायै प्रभवति । तस्मात्प्रमाणपरीक्षा हेतुः हेतुमती प्रमेयपरीक्षेति । द्वादशविधं प्रमेयं तत्कस्मात्प्रथमत आत्मैव परीक्ष्यते न प्रमेयान्तरमित्यत आह । तत्रात्मादिष्वात्मा विचार्यतइति । (३३५।५) आत्मैव हि प्रमेयेषु प्रथममुद्दिष्टो लक्षितश्चेति तदनुरोधादात्मैव प्रथमं परीक्ष्यते न प्रमेयान्तराणीति । अत्र च यद्यपि स्वरूपेणात्मन्येव परीक्षां प्रतिजानीते तथा ऽपि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणाल् लक्षणपरीक्षैव द्रष्टव्या । यथा चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते । तदेतद्वार्त्तिककारो व्याचष्टे । आनन्तर्यादिति । किं पुनः प्रयोजनं प्रमेयपरीक्षायाः न हि निष्प्रयोजनं परीक्षन्ते प्रेक्षावन्त इत्यत आह । यद्विषयो ऽहंकार इति । अहंकार इत्यात्मादिविषयं मिथ्याज्ञानं निर्दिशति । शरीराद्यभेदेनात्मदर्शनं खलु संसारं प्रवर्तयतीत्युक्तं द्वितीयसूत्रे । अनेन प्रमेयपरीक्षायाः प्रयोजनवत्त्वं दर्शितम् । अत्र भाष्यकारेण विचारपूर्वरूपः संशयो दर्शितः । किं देहेन्द्रियमनोबुद्धिसंघातमात्रमात्मेति । संशयकारणं चोक्तं व्यपदेशस्येति । यद्यपि वृक्षप्रासादयोरवयविसमुदाययोरन्ययोरेवावयवेन समुदायिना च व्यपदेशस्तथाऽप्यवयव्यभावं समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यम् । तदेतद्वार्तिककार आक्षेप्तुं पृच्छति । किं पुनरस्येति । उत्तरं किं शारीरेति । आक्षिपति नेति । समानधर्मणो धर्मिणो दर्शनात्संशयो न पुनरदर्शनादित्यर्थः ।

समाधत्ते । नेच्छादिसूत्रेति । इच्छादयो हि कार्यत्वाल्लि-
ङ्गमात्मन इति दर्शितम् । तान्येव तु लिङ्गानि दर्शयत्येषितारं
परीक्ष्यन्ते । किं देहेन्द्रियव्यतिरिक्त एतेभ्यः सिध्यति आहो
स्विदभिन्न इति युक्तो विचारः । अपि चायमात्मशब्दाभिधेयो
धर्मी सर्वतन्त्रासिद्धः केवलमस्य शरीरेण सह भेदाभेदे वादिनां
विवाद इत्याह । अविप्रतिपत्तेश्चेति । (३३८।१) ननु चा-
त्मासत्त्वे परैः प्रमाणान्यजातत्वादीन्युपन्यस्तानि तत्र कथं न
तत्सत्त्वे विप्रतिपत्तिरत आह । असत्त्वप्रतिपादकप्रमाणा-
भावाच्चेति । वाद्येवासौ न भवति यो धर्मिणि विप्रतिपद्यते
न हि धर्मिणि विप्रतिपद्यमानस्यास्ति किंचित्प्रमाणं सर्वस्य त-
स्याश्रयासिद्धेरप्रमाणत्वात् । अभावस्य च भावाधीननिरूपण-
स्याश्रयासद्भावानिरूपणात् । तस्माद्धर्म्यभाववादी न लौकिको
न परीक्षक इत्युन्मत्तवदुपेक्षणीयः । धर्म्यसिद्धिवादिनां प्रमाण-
मुपन्यस्यति । न नास्तीति । निराकरोति । तत्र नास्त्यात्मे-
ति । यत्पुनरपरे समादधुः

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ।
शब्दार्थस्त्रिविधो धर्मी भावाभावोभयाश्रयः ॥

भावाश्रयो यथा नीलमिति अभावाश्रयो यथा शशविषा-
णमिति उभयाश्रयो यथा ऽमूर्तमिति । अमूर्तं हि भवति वि-
ज्ञानं भवति च शशविषाणम् ।

तस्मिन्बाह्यानुपादाने साध्ये ऽस्यानुपलम्भनम् ।
तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगत इति ।

सो ऽयमात्मविकल्पो बाह्योपादानो न भवतीति । यथा नील-
विकल्पो बाह्यनीलोपादानः नैवमात्मविकल्पो बाह्योपादान इत्यर्थः ।
तत्रैवं भवान्प्रष्टव्यो जायते । किमात्मविकल्पस्य बाह्योपा-

दानत्वमात्रं प्रतिषिध्यते किं बाह्यात्मोपादानत्वम् । पूर्वस्मिन् सिद्धसाधनं मा भूदात्मविकल्पो बाह्यनीलाद्युपादानः किं नः छिन्नम् । उत्तरस्मिंस्तु कल्पे कार्यं बाह्यात्मा सिद्धः यदुपादानत्वं विकल्पस्य प्रतिषिध्यते । सिद्धश्चेत् क्वापि नास्यात्यन्ताय प्रतिषेधः । असिद्धश्चेत् कथमप्रतीतस्य निषेधः । प्रतीतो विकल्पे बाह्ये निषिध्यते चैत्र इव गेहे चत्वरतले निषिध्यतइति चेत् । एवमपि यत्र प्रतीतस्तत्र न निषिध्यते यथा भवद्भिरेवोक्तं न तस्यैवाभावः शब्दप्रयोगत इति । बाह्यश्चात्मा विकल्पेन नोपदर्शित इति प्रसक्त्यभावान्न शक्यो निषेद्धुम् । अप्रदर्शितोऽप्यध्यवसित इति प्रसक्त एवेति चेत् । ननु विकल्पस्य को ऽयमध्यवसायो नाम । ग्रहणादतिरिक्तः ग्राह्यस्य स्वाकारस्य वा ऽऽलीकस्य वा बाह्याध्यारोप इति चेत् । न बाह्याऽविषया विकल्पा बाह्यमारोपयन्तीति चित्रम् । न हि आरोपविषयारोप्ये अजानन् आरोपयितुमर्हतीत्यसकृदावेदितम् । अपि च अलीकं प्रतीयमानं यथा न निषेद्धुं शक्यं प्रतीयमानत्वादेवमस्य बाह्यत्वमपि । मिथ्यात्वात्प्रतिषिध्यतइति चेत् । तत्किमलीकमपि सत्यं यत्तदुल्लङ्घ्य बाह्यत्वं प्रतिषेद्धुमध्यवसितो ऽसि बाह्यभेदग्रहस्तदध्यवसायो न प्रमाणक इति न निषेधगोचरः । न च ज्ञानाकार आत्मा परमार्थसन् बाह्यत्वेनारोप्यमाणः प्रतिषिध्यत इति सांप्रतम् । विज्ञानमये हि सर्वथा बाह्यस्याग्रह तत्समारोपसंभवात् । अत्यन्तासतश्च बाह्यस्य विज्ञानात्मना ग्रहे तथाविधेनासना विज्ञानानात्मना विज्ञानग्राह्येण किमपराद्धं येन तद्ग्राह्यो न स्यादिति विज्ञाननयो दत्तजलाञ्जलिः प्रसज्येत । न चायमात्मा पूर्वापरकालावस्थायी क्षणिकविकल्पाकारो भवितुमर्हति येन तदाकारो बाह्यत्वेन प्रतिषिध्यते । तस्मादन्यत्र दृष्टमन्यत्र समारोप्य प्रतिषि-

ध्यतइति युक्तम् । स च समारोपः क चित्स्वकारणप्रभवः क चित्प्रतिषिध्यते यथेन्द्रियादिदोषादुत्पन्नरजतज्ञानस्य शुक्तिकायां नेदं रजतमिति । क्वचित्पुनराहार्यो यथा नेह चैत्रइति । तस्मादात्मनो देशकालान्तरे वस्तुनि विकल्पनं विज्ञाने चासंभवादत्यन्तासतो समारोपः तदभावादात्मन्येव नास्ति अस्ति चेत्कथमत्यन्ताय निषेधः । तस्मादात्मा नास्तीति पदयोर्व्याघातः । यद्यप्यात्मा नास्तीति पदानि तथा ऽपि नास्तीत्येकपदं विवक्षित्वा पदे इति द्विवचनोपपत्तिः । पद्यते गम्यते ऽनेनार्थ इति विवक्षित्वा पदसमुदायो ऽपि पदमुच्यते । यद्यपि घटादीनां देशान्तरादौ निषेधस्तथा ऽपि आत्मनोऽत्यन्ताय भविष्यति न हि प्रतिषेधान्तरमपेक्ष्यं प्रतिषेधान्तरमनुबध्नातीत्यत आह । सर्वत्राय-मिति । उपपादितमेतदधस्तात् यथा चाननुभूतमशक्यमारोपयितुमिति न क चिदात्मन्यन्याधारत्वमुक्तं स्वातन्त्र्यादात्मनः, सामान्यादयस्तु पिण्डादिपरतन्त्रनिरूपणाः पिण्डाद्याधारा इति ।

पृच्छति । किमयमिति (३३७२) यत्र क चिदस्ति तदत्यन्तमसत् तथा चायं तस्मादत्यन्तमसन्निति भावः । उत्तरं न नास्तीति । न तावन्न क चिदस्तीति वाक्यमात्मानं स्वरूपेण निषेधति देशरूपविशेषप्रतिषेधात् । शङ्किना आह । कथं वाचोयुक्तिरिति । उत्तरवाक्याह । एषा वाचोयुक्तिरिति । एषा वक्ष्यमाणार्था । तदर्थमाह । यत्रथाभूतमिति । न हि पदार्थानां सत्ता देशबलेन व्याप्ता येन देशवत्त्वं निवर्त्तमानं तां निवर्त्तयेदिति भावः । न च कालविशेषप्रतिषेधो ऽपीति । कालान्तरप्रतियोगी एकैकः कालः कालविशेषः तत्प्रतिषेधो ऽप्यकास्मन्ययुक्तः न हि यथा घटादिष्वनवच्छेदार्थः कालः तथा नित्यआत्मनि । प्रध्वंसाभाववान् घटः खल्वासीत् तथा ऽऽत्मा

प्रागभाववान् घटो भविष्यति न तथा आत्मा । अतीतप्रागभावो ऽनागतप्रध्वंसः घटो वर्तमानो न च तथा आत्मा तस्मान्नास्यावच्छेदार्थेन त्रैकाल्यमुपावर्तते । अतीतानागतव्यपवृक्तवर्तमानक्रियाव्यङ्ग्यः कालो ऽस्ति सदा नित्यानां यतो ऽस्त्यात्मा विद्यते व्योमेति तस्मादवच्छेदकत्रैकाल्याप्राप्तेः न त्रैकाल्यप्रतिषेधः । अतीतानागतव्यपवृक्तक्रियाव्यङ्ग्यस्य च वर्तमानस्याप्यनिषेधत्वाद् नात्मनि कालप्रतिषेध इति स्थितम् । आत्मप्रतिषेधं चेति । आत्मेति हि पदं लोकसिद्धं पद्यते ह्यनेन कश्चिदर्थः येन न कश्चिदर्थः पद्यते तदपार्थकं भवितुमर्हति । किमसतः सत्ता साधर्म्यमिति । तर्हि भवतां सिद्धान्ते सर्वोपाख्यारहितमसत्प्रमेयमपीति भावः । अथ शरीरादेरात्मत्वं कल्पितं निषिध्यते शरीरादयो नात्मान इति तत्राह । आत्मसामान्यं चेति । अथ शरीरादीति । अहंकारस्तावत्परमार्थतः शरीरादिविषयः स्थूलो ऽहं गौरो ऽहमिति प्रत्ययात् । तमिममात्मेति कल्पयित्वा विपर्यस्यति तदनुरूपं व्यपदिशति व्यवहरति च । सो ऽयं विपर्ययः प्रतिषिध्यते नास्त्यात्मेति । निराकरोति । एवं शरीरादीति । ( ३३८ । १ ) न ह्यहंकारसमारोपविषयसत्त्वमनभ्युपगच्छतः समारोप उपपद्यते तस्मात्तत्प्रतिषेधतो व्याघात इत्यर्थः । चतुर्णामुपादानरूपत्वात् तमस इति । रूपरसगन्धस्पर्शाश्चत्वारो घटादिरूपेण परिणतास्तेषामुपादानरूपं नभ इति उपादीयतइत्युपादानम् । उपादेयरूपत्वादिति क्वचित्पाठः स तु सुगमः । सो ऽयं वात्सीपुत्राणां वैभाषिकाणां सिद्धान्तः तेन विरोध इत्यर्थः । सुगममन्यत् । अथायं भावप्रतिषेध इति । ( ३३९ । १६ ) न जन्ममात्रप्रतिषेधो ऽपि तु आत्मनो भावः सत्ता प्रतिषिध्यत इत्यर्थः । स्वतन्त्रस्य धर्मस्य समवायादन्यस्याहर्शनादिति । अनि-

कायो देवमनुष्यतिर्यगादीनामनौत्तराधर्येणावस्थितः संघातः त-द्विशिष्टाभिरित्यर्थः । कार्यं कारणं वेति । ( ३४० । १५ ) यदि विषाणमवयवस्तदा कारणं यदि तु केशनखादितुल्यत्वेना-नारम्भकत्वान्नावयवस्तदा कार्यं तस्मात्तत्प्रभवतीति । उक्तमप्य-र्थं पुनर्विकल्पयन् पर्यनुयोगार्थमाह । इदं शशविषाणं ना-स्तीति ब्रुवाण इति । सामान्यप्रतिषेधो विषाणसम्बन्धमात्रप्र-तिषेध इति । विशेषप्रतिषेधः कार्यकारणभावलक्षणसम्बन्धप्रति-षेध इति । विषयस्वभावभेदानुविधायीति । अहमिति विज्ञानं मानसं विषयस्यात्मनो यः स्वभावभेदः कर्तृत्वभोक्तृ-लक्षणो जाने ऽहं भुञ्ज इत्यादिस्तदनुविधायि । एतदुक्तं भवति न केवलमात्मस्वरूपमात्मज्ञानस्य विषयस्तथा सति परसमवेतक्रि-याफलशालित्वाभावेनात्मनः कर्मत्वाभावेनाकर्मतया तद्व्याप्यज्ञा-नस्यापि निवृत्तिप्रसङ्गात् । यदा तु धर्मवदात्मविषयं ज्ञानं भव-ति तदा धर्माणां परसमवेतक्रियाफलशालितया तद्व्याप्यस्य ज्ञा-नस्यापि निवृत्तिरिति । जानातिश्चात्मधर्मकर्मा आत्मानमपि गोचरयतीति सूक्तं विषयस्वभावभेदानुविधायीति । अहंकारा-लम्बनेति । ( ३४१ । १६ ) आलम्ब्यते अनेनेत्यालम्बनं ज्ञा-नमहंकारेण च विषयिणा विषयमुपलक्षयति । दर्शयति । ननु भव-त्यहं गौर इति । परिहरति न भवतीति ब्रूम इति । न व्य-पदेशमात्रं देहाद्यव्यतिरिक्तात्मसद्भावसाधनमस्माभिरुक्तं येना-नैकान्तिकं भवेत् । अपि त्वनुभवः । स च न शरीरादिष्विदमो विषयेष्वस्ति । अपि त्वसंभिन्नभेदंविषयो ऽहंप्रत्ययः शरीरा-दयस्तु मतुब्लोपादभेदोपचाराद्वा ऽहमा विषयीक्रियन्ते । ममा-त्मेति तु व्यपदेशमात्रं न पुनः शरीरादिष्विव मकारस्तत्र मु-ख्यो भेदनाप्रतिभासनात् । राहोः शिर इतिवत्तु ममकार आत्म-

नि द्रष्टव्यः । अत एवाह । ममप्रत्ययेति । (१४२।२) न पुन-र्ममकारमात्रं तस्मात्सर्वं रमणीयम् । विरुद्धा प्रतिपत्तिर्विप्रतिपत्ति-र्बाधितेति यावत् । कः साधनार्थ इति । कः साधनशब्दस्यार्थः । अथानुपलब्धिरपि नास्तीति । भावरूपो धर्मो ऽसति विरु-ध्यते नासद्रूप उभयोः समानशीलत्वादित्यर्थः । निराकरोति । कः साधनार्थो ऽनुपलब्धेरिति । असत्तास्तुच्छाया अनुपलब्धेः कः साधनत्वरूपो ऽर्थ इत्यर्थः । शङ्कते । अथ कल्पितस्येति । ( १४३ । नापलब्धिस्तुच्छा किं तु तत्त्वान्तरं मत् सा तु क-ल्पिताश्रयतया नाश्रयासिद्धेत्यर्थः । एतद्विकल्प्य निराकरोति । कथं काल्पितस्येति । न हि तात्त्विक्यनुपलब्धिः परमार्थसदा-श्रया कल्पितसत्त्वस्य धर्मिणो धर्मो भवितुमर्हतीत्यर्थः । द्वितीयं कल्पमाशङ्कते । अथासत्त्वेनेति । निराकरोति । सिध्यत्य-नुपलब्धिरिति । असत्त्वेन कल्पितस्य पारमार्थिकं सत्त्वमनु-मन्तव्यम् । असत्यसत्त्वकल्पनाया अयोगात् तथा च भावाश्र-यानुपलब्धिस्तात्त्विकी सिध्यत्येव । यदर्थं त्वसौ तदेव पार-मार्थिकमसत्त्वमात्मनो न सिध्यति असत्त्वस्य काल्पनिकत्वाभ्यु-पगमादन्यथा सिद्धिरित्यर्थः । अपि चायमसत्वेन सन्तमात्मानं कल्पयि-त्वा ऽत्यन्तासत्त्वमनुपलब्धेरस्य साधयितुमध्यवसितः । तच्चास्य सधर्मेणानुपलब्ध्या न सिध्यति । न जातु स्थाणुधर्मेण कल्पितेन पुरुषे स्थाणुत्वं पारमार्थिकं शक्यं साधयितुमित्याह । किमर्थं चायमात्मेति । रूपादिशब्देभ्यो ऽन्यत्वे सतीति । यदि हि पदत्वादित्युच्यते रूपादिशब्दैरनैकान्तिकं स्यादत उक्तम् । रूपादिशब्देभ्यो ऽन्यत्वे सतीति । यद्येकपदत्वादित्युच्येत रूपादि-शब्दैरनैकान्तिकं स्यादत उक्तं रूपादिशब्देभ्यो ऽन्यत्वेसतीति । त-था ऽपि रूपविज्ञानवेदनासंज्ञासंस्कारा इत्ययं शब्दो रूपादिवा-

चको यः शब्दो रूपं वेदना संज्ञा विज्ञानमित्यादिस्ततो ऽन्यो ऽसमस्तादन्यः समस्त इति तेनानैकान्तिकत्वमत उक्तमेकेति । तेन रूपादिवाचकपदव्यतिरिक्तं यदेकपदं तद्रूपादिव्यतिरिक्तस्य वाचकं यथा घटादिपदं तथा चात्मपदं तस्मात्तदपि तथेति । एतेनेति । आत्मशब्दसाध्यत्वेनैवासंभिन्नेदंप्रत्ययो ऽहंप्रत्ययो व्याख्यातः । शङ्कते असिद्धइति । घट इति रूपादय एवैकोदकाहरणावच्छिन्ना उच्यन्ते । न तु रूपाद्यतिरिक्तो घटो नाम कश्चिदस्तीत्यर्थः । निराकरोति । अत्रोक्तमिति । उपादेयरूपत्वात्तमस इति । यथा दायइति देयमुच्यते एवमुपादायेत्यनेनोपादेयमिति । सविषयत्वं सद्विषयत्वं सिद्धान्तिनोक्तमिति मन्वानश्चोदयति तमः शब्दस्य सविषयत्व इति । यद्यप्यभावविषयत्वे ऽपि न निर्विषयत्वं तथा ऽपि देशकाभिमानमनुविदधानः परिहरति न सूत्रार्थे पुनर्दृष्टान्तो नास्तीति । (३४४।१०) पूर्वमात्मानुपकारकत्वे साध्ये दृष्टान्ताभाव उक्तः पुनरिहोच्यइत्यर्थः । दर्शयति । अथात्मशब्द इति । यो यो वर्णात्मकः ससर्वो ऽनित्यविषयो यथा घटादिशब्दः तथा चानित्यत्वे सति तद्विज्ञानमेव स्यात्मेति फलत आत्मप्रतिषेध इत्यर्थः । एतदपि दूषयति । तथाऽपीति । नित्यशब्दस्तावन्नित्यमाचष्टे अन्यथा न तत्प्रतिषेध इत्यर्थः । शङ्कते अथेति । सिद्धसाधननिवृत्त्यर्थं शरीरादिव्यतिरिक्तविषय इति । निराकरोति तथाऽपीति । रूपादिस्कन्धपञ्चकातिरिक्तं नास्तीति भवतां राद्धान्तस्तदतिरिक्ताभ्युपगमेन विरुध्यतइत्यर्थः । यदि विवक्षितार्थव्यतिरेकेणेति । (३४९।८) वादिनो हि शरीरेन्द्रियबुद्धिवेदनासंघातस्य पारार्थ्यं विवक्षितं परार्थाश्चक्षुरादय इति ब्रुवतो न संघातपरार्थत्वं तथेह पक्षधर्मताबलात्सिद्धपदस्याभि-

प्रायेण व्याप्यते न तु साक्षाद्विवक्षितं तद्वदिहाभिप्रायव्याप्तं वि-
वक्षितमारोप्य यद्यन्वयविरोधौ दृश्येते ततः सर्वानुमानोच्छेदः
एतच्चेश्वरसिद्धौ निपुणतरमुपपादयिष्यते । अथानुमानेन बा-
ध्यत-इति । संघातत्वानुमानमेवाभिमतविपरीतसंघातपरार्थत्व-
पक्षो व्यवस्थालक्षणानिष्टप्रसङ्गरूपतर्कसहायमस्य बाधकं प्राणा-
दिसत्त्वानुमानं वेति । एकदेशेन च एकदेशान्तराणामि-
ति ब्रुवतो वार्तिककारस्य गृहप्रासादादयो नावयविनो विजा-
तीयानामनारम्भकत्वादित्यभिमतम् । अकार्यकारणभूतानां
चेति । (३४७।१९) यथा हि कालाक्षीं गामीक्षितवतः स्वस्ति-
मत्यां गवि भवति प्रतिसंधानं न चैतयोरस्ति कार्यकारणभाव
इत्यर्थः । स्वं चैतन्यं स्वात्मनः स्वातन्त्र्ये सत्यव्यवस्थानाच्
चक्षुरादिवदिति हेतुः प्रमाणसंशयविपर्ययस्मृतिषु यो ऽनुस्यूत
एक उपलभ्यते स चेतनः स्वातन्त्र्ये सत्यव्यवस्थानात् । य-
स्त्वचेतनो नासौ स्वातन्त्र्ये सत्यवस्थितो यथा चक्षुरादिरिति व्य
तिरेकी हेतुः । यद्यव्यवस्थानादित्येतावन्मात्रमुच्येत ततो मन-
सा ऽनैकान्तिकं स्यादत उक्तं स्वातन्त्र्ये सतीति । अथ वा
कृतमव्यवस्थानेन स्वातन्त्र्यमेव केवलमस्तु चैतन्यसाधनमित्या-
ह । नाचेतन आत्मेति । प्रमाणसंशयविपर्ययस्मृतिष्वनुस्यूत-
मनुभूतम् उपलक्षयति । निराकृतमप्यर्थं प्रकारान्तरेण पुनरुप-
न्यस्य निराकरोति । पृथिव्यादिनित्यत्वसाधनइति । भा-
ष्यं भिन्ननिमित्तावितिति । भिन्नमिन्द्रियं निमित्तं ययोः, अन-
न्यकर्तृकौ-आत्मैककर्तृकौ, समानविषयौ-द्रव्यमेकं विषय इ-
त्यर्थः ॥ १ ॥

पूर्वपक्षसूत्रम् —

न वि-त् ( सू० २ )॥ यद्भावाभावानुविधायिनी ज्ञान-

भावाभावौ तच्चेतनम् । इन्द्रियभावाभावानुविधायिनौ ताविति तदेव चेतनमिति भावः । सिद्धान्तभाष्यं संदिग्धत्वादहेतुः अनन्यथासिद्धावन्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणं न तु कर्ता न चेतनश्चेतनं करणमित्यत्रेत्यर्थः ॥ २ ॥

विषयव्यवस्थानं च विरुद्धमिन्द्रियादीनामचैतन्यस्य साधनादित्याह । यथोक्तमिति ।

सर्व-धः ( सू. ३ )॥ सर्वज्ञ इत्यस्य विवरणं सर्वविषयग्राही सर्वेषामिन्द्रियाणां च ये विषयास्तद्ग्राही इन्द्रियान्तराणि प्रमाणान्तराणि च पुनर्व्यवस्थितविषयाणि तेनार्वागपि सर्वज्ञ इति सिद्धम् । तत्रेदमभिज्ञानमिति । असाधारणं चिन्हमभिज्ञानमुच्यते तच्चाप्रत्याख्येयमनुभवसिद्धत्वात् । चेतनवृत्तमभिज्ञानमप्रत्याख्येयमुदाह्रियत इति योजना । अनियतपर्यायमनियतक्रममित्यर्थः । अनेकविषयमर्थजातमिति । अनेकपदार्थो विषयो यस्यार्थजातस्य तत्तथोक्तम् । क्व चित्पाठो ऽनेकविषयमर्थजातमिति स सुगम एव । आकृतिमात्रं त्विति । सामान्यमात्रमित्यर्थः । तदेतच्चेतनवृत्तं देहादिभ्यो व्यावर्तमानं तदतिरिक्तं चेतनं साधयतीति स्थितं नेच्छाद्याधारत्वं देहादीनामिति ॥ ३ ॥

सूत्रान्तरमवतारयति भाष्यकारः इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रमिति ।

शरीर-वात् ( सू. ४ ) ॥ प्राणातिपाते पातकाभावप्रसङ्गादिति। अयं यद्यपि भूतचैतन्यिकानां नानिष्टप्रसङ्गस्तथा ऽपि शाक्यान्प्रति द्रष्टव्यः ते हि प्राणातिपातकृतं पातकमिच्छन्ति । एवं च न बुद्धिरात्मेति वक्तव्ये देहादिग्रहणं विचित्राभिसंधित्वात्संगतं, यदि कश्चिद्भूतचैतनिकः प्राणातिपातकृतं पातकं चे-

ष्वेवं प्रति दूषणं भवत्वेवमर्थमिति मन्तव्यम् ।

वार्त्तिकम् । अकृताभ्यागमकृतनाशदोष इति । (३५०।१७) येनाकृतं कर्म प्राणातिपातः तस्य पातकाभ्यागमो येन च कृतं तस्य नाश इत्यर्थः । शास्त्रचोदितं फलमनुष्ठातरीत्ययमुत्सर्गो यत्र पुनः शास्त्रमन्यस्य फलमाह यथा श्राद्धे वैश्वानरीयेष्ट्यादौ तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृताया वा जातेष्टेः पुत्रगामि फलमिति । भावना स्मृतिहेतुः संस्कारः । यत्काये-ति । (३५१।२) येन कायेनोपलक्षितः कश्चिच्चित्तसन्तानः स कायान्तरवर्त्यपि फलं भुङ्क्त इत्यर्थः । एकनिमित्तानां प्रत्ययानां प्रतिसंधानादिति । उक्तमेतद् यथा नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसंधानमिति । सर्वावस्थोपलब्धेरिति । (३५२।७) सर्वावस्थासु बीजावयवानामुपलब्धेः परमाण्ववस्थत्वे त्वनुपलम्भः स्यात् । तस्मान्न बीजावयवाः पच्यमाना अङ्कुरोत्पत्तौ परमाण्ववस्था भवन्ति । अपि त्ववयविन एव पच्यन्त इत्यर्थः । परमाण्ववस्था बीजावयवा न बीजत्वादिजातिविशेषवन्तमारब्धुमर्हन्तीत्युक्तं सिद्धान्तिनेति मत्वा दर्शयति । यदि वर्हीति । परिहरति नानेनैवोक्तोत्तरत्वादिति । प्रतिसंधानाय बीजत्वजातीयानवयवान् लक्षितुमस्माभिर्बीजावयवानां परमाण्वन्तो विभागो निषिद्धः कल्पादौ त्वारम्भे परमाणूनां न प्रतिसंधानमस्ति न हि पूर्वसर्गे ये बीजमारेभिरे सांप्रतमपि त एवारभन्ते नान्य इति प्रतिसन्धाननियमः अपि त्वन्येभ्यो ऽपि भवन्तीति भावः । पैलुकण्ठः शङ्कते । आमद्यणुकपाका-नुपपत्तिरिति चेत् । परिहरति नाप्रतिबन्धादिति । सान्तराण्येवावयविद्रव्याणीत्यर्थः । अथायमवयवानुप्रवेशो द्रव्यस्य विनाशकः कस्मान्न भवतीत्यत आह । यदि आपमवयवानु-

प्रवेशा इति । ( ३५३ । ६ ) भाजनगतानामपां भाजनविनाशे ऽवस्थानमेव न स्यात् । सान्तरत्वे तु तावत्य एवापो भाजने स्पन्दन्ते यावतीभिर्बहिः शीतस्पर्शोपलब्धिर्भवति मात्रया च तत्र कालपरिपाकवशादनवस्थानमपि विनाशे तु सहसानव-स्थानमपां भाजनगतानां भवेदित्यर्थः । व्यवहिते द्रव्ये स्फाटि-कभाजने न तुल्योपलब्धिरिति शङ्कते । सुखी स्यामिति तत्प्रक्रियेति चेत् । यद्यपि विज्ञानस्कन्धास्तथा ऽप्यना-द्यविद्यावासनावशो ऽयमेकमहंकारास्पदं सत्त्वमित्यभिमन्य-मानः सुखी भवेयं दुःखी मा भूवमिति तृष्णक् प्रवर्तत इत्यर्थः । निराकरोमि तत्राननुभूतत्वादिति । यथा च क्षणिकानां विज्ञानानां परस्परवार्त्तानभिज्ञतया न प्रतिसंधानक्षमत्वं तथो-पपादितमस्माभिरात्मलक्षणावसर इति । नानागमानामनुत्प-त्तेः सत्त्वादिति ( ३५४ । १७ ) न च ब्रह्मचर्यादिपरिपाक-सहितेन ज्ञानक्षणेनासमर्थो ज्ञानक्षणो जन्यते स च न ज्ञानान्तरं प्रसूत इत्यनागतानुत्पत्तिरसमर्थस्य च क्षणस्य स्वभावतो विनाश इति युक्तम् । असमर्थक्षणोत्पादस्यैव सहकारिसापेक्षत्वानपेक्ष-त्वानुपपत्तेः । यथा चैतत्तथा क्षणभङ्गभङ्गावसरे उपपादयि-ष्यते ॥ ४ ॥

तद् न ( सू० ५ ) ॥ वैनाशिको नैयायिकपक्षवत्सांख्यपक्षे ऽपि हिंसातत्फलानुपपत्तिमापादयितुं हिंसां तत्फलमभवं पूर्वप-क्षयति । इयं तु हिंसेति ( ३५५७ ) व्यक्तेरिति । सदेव कार्यं कारणेन व्यज्यते न त्वसत् क्रियत इत्यर्थः । परिहरति नेति । त्रिविधो ऽप्ययं धर्मलक्षणावस्थापरिणामो नित्यात् धर्मिणो न भिद्यते इति परिणामानित्यत्वं धर्मिनित्यत्वेन विरुध्यते । अविरोधाय वा धर्मिणो ऽनित्यत्वाभ्युपगमे वैनाशिकपक्षोक्तदोष-

प्रसङ्ग इत्यर्थः । गुण इति । ऋजुत्ववक्रत्वे खलु गुणौ प्रचयसंयोगविभागविशेषौ सत्येव द्रव्यारम्भकसंयोगे उदयव्ययवन्तावनुभूयेते इति । तदेतद् नैयायिकपक्षदूषणं सांख्यपक्षे ऽप्यापाद्य नैयायिकं पृच्छति अथात्मनो नित्यस्येति । ( ३५६ । १० ) नैयायिक आह । सुख दुःखे इति । नित्यादात्मनो व्यतिरिक्ताभ्यां पुण्यपापाभ्यामात्मधर्माभ्यामनित्याभ्यामात्मधर्मावेव सुखदुःखे जन्येते इत्यर्थः । एतदुक्तं भवति । नित्यस्यानित्यधर्माधानमेवोपकारो न तु नित्यस्वरूपकरणं येन तदानित्यं स्यात् । धर्मश्च धर्मिणो भिन्नो न तु धर्मिस्वभावः । यथा च भेदाविशेषे सत्यपि वह्निधूमयोरेव कार्यकारणभावो न वह्निक्रमेलकयोर्वस्तुस्वभावनियमात् । एवं भेदाविशेषे ऽपि आत्मनः पुण्यपापयोरेव धर्मधर्मिभावो नात्माकाशयोः पुण्याकाशयोर्वेति लेशमात्रमत्रोक्तं विस्तरस्तु क्षणभङ्गभङ्गे भविष्यतीति । नानेकान्तादिति । बाह्याभिमतपरमाणुनित्यत्वग्राहिप्रमाणदार्ढ्येनानैकान्तिकत्वमुक्तं न तु बौद्धराद्धान्ते नित्यः परमाणुरिति । अत एवापरितोषेणान्यथासिद्धिमाह । चर्मणश्चानित्यत्वमिति । तद्गतां चोपलादीनामवस्थानादिति । नामति विनाशप्रत्यये विनाशे ऽस्ति किं चित्प्रमाणम् । उपलादिषु चावयवविभागविनाशाभ्यां प्राग् न विनाशो ऽनुभूयते क्षणभङ्गभङ्गश्च निषेत्स्यतइति भावः । आरब्धकार्याणां द्रव्यान्तरानारम्भिका इति । ( ३५७ । १५ ) अवयव्यारम्भकात्संयोगाद्भेद उक्तः । विक्रियायां च दृष्टान्ताभाव इति । धर्मोत्पादमन्तरेणाविनश्यतो धर्मोत्पादमन्तरेणाविनश्यतो धर्मिस्वरूपस्य विक्रियायामित्यर्थः । शङ्कते यथेयमिति । यथेवंभूतो विकारः यादृशो घटादीनां श्यामतानिवृत्तौ लोहितोत्पादे विकारस्तादृशो नात्मन इति यदि शङ्कत-

इत्यर्थः। निराकरोति। आत्मन्यपीति । न बाह्येन्द्रियस्यैव एव विकारो ऽपि तु धर्मान्तरोत्पादमात्रं तच्चात्मन्यप्यस्तीति॥५॥

न का-त् ( सू. ६ ) ॥ वैकल्यं वा प्रमापणं वेति। ( ३५८ । ८ ) यथा शरीरमुपघ्नन् हिनस्त्येवं चक्षुराद्युत्पाटयन् हिनस्त्येवेति। पृच्छति कुत एतदिति। स्वरूपतो हिंसासम्भवे भाक्ती हिंसा न युक्तेति वैनाशिकस्याभिसन्धिः। उत्तरं हिंसाफलोपभोगस्येति। वैनाशिकस्यापि विशरारूणां भावानां न स्वरूपहिंसा कारणजन्येति विलक्षणोत्पादो हिंसेति वक्तव्यं तत्र कारणव्यापारसम्भवात् तथा च तत्रापि हिंसा भाक्तीति भाक्तत्वस्योभयत्राप्यविशेषाद् यस्मिन्पक्षे कृतहानमकृताभ्यागमदोषो नास्ति स पक्षो ऽभ्युपेतव्यः। स च नित्यस्वपक्षः तस्मात्पारिशेष्यात्तत्सिद्धिरिति । ज्ञानचिकीर्षाप्रयत्नानां समवायः कर्तृत्वमिति। ( ३५९ । ३ ) उपायतद्व्यापाराणामनभिज्ञो हि चिकीर्षन्नपि न कर्ता एवमभिज्ञो ऽप्यचिकीर्षन् तथा चिकीर्षन्नप्यलसतया अप्रयतमानो न कर्तेति। सुखःदुःखसंवित्समवाय इति । स्वसुखःदुःखेति द्रष्टव्यम्। अस्ति हि परकीयसुखदुःखसाक्षात्कारो योगिनां न चैते भोगिनः ॥ ६ ॥

इतश्च देहादिव्यतिरिक्त आत्मा कुतः।

सव्य-त् ( सू. ७ ) ॥ तत्र मानसमनुव्यवसायलक्षणं प्रत्यभिज्ञानं भाष्यकारो दर्शयति। तमेवैतर्हीति। व्यवसायं बाह्येन्द्रियजं प्रत्यभिज्ञानमाह। स एवायमर्थ इति। अस्यैव चानुव्यवसायः पूर्वः ॥ ७ ॥

तदेतच्चक्षुरैक्येनाक्षिपति।

नैक-त् ( सू. ८ ) ॥

समाधत्ते ।

एक—त्वम् ( सू. ९ ) ॥ विनाशाविनाशलक्षणविरुद्धधर्माध्यासाभावान्नानात्वमित्यर्थः ॥ ९ ॥

आक्षेप्ता ऽऽह ।

अव तुः ( सू. १० ) ॥

समाधाता आह ।

दृष्टा—धः ( सू. ११ ) ॥

तृतीयं व्याख्यानमाह ।

अथ वा एकविनाशेऽप्यनियमादिति । एकत्वे चक्षुषो विनाशनियमो न स्यात् । सव्यस्यैव चक्षुषो न दक्षिणस्येति । एकत्वात्सव्यविनाशे दक्षिणस्यापि नाशप्रसङ्गात् । दृश्यते चायं नियमः । तस्माद् द्वावर्थौ पृथगावरणौ पृथगुपघातौ चेति । अपि च यदि चक्षुरेकं सव्येन नासावंशेनावपीडितं ततोऽङ्गुल्याऽवपीडितं यथैकं भिन्नमिवावभासयति । अवपीडनेऽनिवर्तमाने भिन्नावभासौ तावर्थौ संदधातीति । तथा नासावंशावपीडितं भिन्नमिव दर्शयेत् तन्निवृत्तौ सन्दध्यादित्याह । अवपीडनाच्चैकस्य चक्षुष इति । रश्मिभेदाद्विषयसन्निकर्षस्य भेद इत्यर्थः । अङ्गुल्यवपीडितेन चक्षुषा दृष्टान्तेन विरोधादित्यर्थः । एकविनाशेनेतरविनाशो वा दृष्टान्तः । तेन विरोधादिति । स खलु दृश्यमानश्चैकान्तावधारणादतश्चेति दृष्टान्त इति सूत्रार्थः ।

तदेतत्प्रकरणं वार्त्तिककारो दूषयति । सिद्धत्वादनारम्भ इति । युक्तोऽन्यः समुच्चयः शास्त्रे । अयमभिसन्धिः । काणस्तथा न पश्यति पिहितैकलोचनो वा यथा ऽविकलेन्द्रियः । तत्र यदि सव्यदक्षिणाधिष्ठानभेदभिन्नं चक्षुर्भेदेन द्वयमणुना मनसा

युगपद्दधिष्ठातुं शक्यमित्यन्यतरदधिष्ठेयम् । तथा च सर्वं एवैकै-
केन चक्षुषा पश्यतीति पिहितैकलोचनेनातुल्योपलम्भः अविक-
लाक्षस्य स्यात् । न चैवमस्ति एकत्वे तु तदुभाभ्यामधिष्ठाना-
भ्यां विनिर्यत्क्वचिदपि मनसा ऽधिष्ठितमेवेत्यविकलाक्षस्य न
विकलाक्षवदुपलम्भप्रसङ्गः । तस्मादेकमनेकाधिष्ठानं चक्षुरिति ।
प्रकरणाविरोधश्चेन्द्रियपक्षत्वादिति (३६०) । न चैतदेक-
स्मिन् शरीरे जात्यभिप्रायं प्राणादीनां व्यक्तीनां चतसृणां व्य-
त्ययान्तरेण समापिन्यग्राहारोपपत्तेर्न तु जात्या न हि भवति ब्राह्म-
णावुभिष्ठिरावागताविति किं तु ब्राह्मणराजन्याविति वा कपि-
ष्ठयुधिष्ठिराविति वा । विनष्टे ऽप्येकस्मिन्नधिष्ठाने योऽविनष्टो
ऽवशिष्यते तेन प्रत्ययमात्रं कारणस्यैव भवति । न च नामाङ्ग-
ल्यावपीडितेन सर्वेषां सर्वदा सर्वत्र द्विचन्द्रवद्भ्रमप्रसङ्गः । आ-
गन्तुकमवपीडनं भ्रमहेतुर्नौत्पत्तिकमिति कार्यदर्शनात्कल्प्यते॥११॥

तदेवं प्रतिसन्धानद्वारेणात्मनि प्रत्यक्षं प्रमाणयित्वा अनु-
मानमिदानीं प्रमाणयति । अनुमीयते चायमिति । (३६१ ।
१५) विप्रतिपन्नं हि प्रति प्रतिसन्धानमुक्तं परमार्थतस्तु अनुभवा-
नुसारमार्गो ऽयमिति मन्तव्यम् ॥

इन्द्रि-त् ( सू. १२ ) ॥ कस्य चिदम्लचिरबिल्वादेर-
नुभूतस्य तेन सहचरितं रूपं वा गन्धं वा ऽनुभवति । अथ
तत्सहचरितं रसमनुस्मरति स्मृत्वा चेच्छति इच्छातो रसनेन्द्रि-
यविकारो दन्तोदकसंप्लवलक्षणः प्रवर्तते तद्दर्शनाच्चास्येच्छानु-
मीयते इच्छया च स्मृतिः सेयं स्मृतिरस्त्यात्मनि सर्वेन्द्रियवि-
षयवेदिनि न भवितुमर्हतीति ॥ १२ ॥

अस्याक्षेपसूत्रम् ।

न स्मृ-त् ( सू. १३ ) ॥ स्मृतिरात्मानं कारणत्वेनावग-

मयेत् विषयत्वेन वा । न तावत्कारणत्वेन तस्याः संस्कारकारणत्वात् । न विषयत्वेन स्मर्तव्यविषयत्वात् । स्मृताच्च तस्मादिन्द्रियान्तरविकारोत्पत्तिरित्यर्थः ॥ १३ ॥

समाधत्ते ।

तदा-धः ( सू. १४ ) ॥ असत्यात्मनि स्मृत्यनुत्पत्तिं दर्शयित्वा स्मर्तव्यार्थविषयैव स्मृतिर्नात्मविषयेति पूर्वपक्षिणोऽवधारणं खण्डयति ।

अपरिसंख्यानाच्च स्मृतिविषयस्येति (सू.१५) ॥ मानसानुव्यवसायजनितसंस्कारकारणासु चतसृष्वपि स्मृतिषु नार्थमात्रं विषयोऽपि तु ज्ञानज्ञातृज्ञेयानि सर्वएव विषयाः चतुर्षु वाक्येषु एकत्र ज्ञानं क्रिया कारकान्निष्कृष्टा यथा अमुष्मिन् मम ज्ञानमभूदिति अगृह्यमाणोऽर्थः स्मृतिसन्निधापनादमुष्मिन्नित्युच्यते कारकादनिष्कृष्टाप्येकत्र पूर्वापरीभूतभावनाप्रधाना ज्ञानक्रिया गम्यते अज्ञासिषमहममुमर्थमिति । अन्यत्र तु ज्ञानभावने कारकादनिष्कृष्टे कर्तृप्रधाने यथा ज्ञातवानहममुमर्थमिति । अन्यत्र ज्ञानभावने कारकादनिष्कृष्टे कर्मप्रधाने यथा ऽसावर्थो मया ज्ञात इति । समानार्थमिति । ज्ञानज्ञेयज्ञातृप्रकाशनं समानमित्यर्थः । एवं तावदगृह्यमाणेऽर्थे स्मृतिः प्रदर्शिता । अथ प्रत्यक्षेऽर्थे स्मृतिः प्रदर्श्यते । अथ प्रत्यक्षेऽर्थ इति । स्मृतिरिति प्रत्यभिज्ञानमाह स्मृतिच्छायावाहित्वात् । अद्राक्षमिति । पूर्वार्थमर्थदर्शनं परामृषति तेनार्थदर्शनानुभवः कल्प्यतामनुभवकल्पना तु कुतस्त्येत्यत आह । न खल्वसंविदिते स्वे दर्शने इति । अपि त्वर्थदर्शनं तद्दर्शनं च संविदिते एवेत्यर्थः । कुत एतदित्यत आह । एतदद्राक्षमिति । यस्मादनुभवपुरस्सरं यदत्राद्राक्षमिति भवति नूनं तत्रानुभवप्रथाऽप्यभूदिति

कल्पनीयमित्यर्थः। इतो ऽपि न शरीरगुणः स्मृतिः बाल्ये अनुभूतस्य वार्धके स्मरणात्। अन्यद्धि बालशरीरमन्यच्च वृद्धशरीरमिति। आस्तां तावत्प्रत्यभिज्ञानं, सादृश्यमपि दुर्विज्ञानम्। न च परमाणूनां चैतन्यं, ते हि प्रत्येकं वा चेतयेरन् मिलिता वा। पूर्वस्मिन् कल्पे अनेकचैतन्ये एकस्मिन् शरीरे नैकमित्यनियमो भवेत्। न हि नानाचेतनानामैकमत्यनियमो दृष्टः मिलितानां तु चैतन्ये परमाणूनामावापोद्वापभेदेन मेलकस्य नानात्वात्स एवान्योपलब्धस्यान्येन स्मृत्यभावप्रसङ्गः। तस्मान्न शरीराधारा चेतनेति।

परेषां कारिकां दूषयति वार्तिककारः। **एतेन न तच्चक्षुषि नो रूपइति प्रत्युक्तम्।** (२६३।६) आत्मनः पारिशेष्यात्सिद्धेः स्मृत्याधारत्वव्युत्पादनेनेत्यर्थः। यत्राधिकरणे तज्ज्ञानं निष्ठितं भवेन्न तदधिकरणमस्ति न च नास्तीति व्याहतम्। स्यादेतद् नायं विशेषप्रतिषेधो न चक्षुषि विज्ञानं न रूपइति, किं तु ये चक्षुराद्याश्रयं विज्ञानं मन्यन्ते तन्मतं प्रतिषिध्यते। आधारवत्त्वं तु न प्रतिषिद्धमप्रसक्तत्वादित्यत आह। **कस्य वेति।** अपि चैषा कारिका आत्माभावविवक्षया प्रयुक्ता आत्मसत्त्वमेव प्रतिपादयन्ती विवक्षितविरुद्धेत्याह। **अयं च विज्ञानस्येति।**

तदेवं भाष्यमतेनेन्द्रियान्तरविकारादिति सूत्रं व्याख्याय वार्तिककारः स्वमतेन व्याचष्टे। **अथ वैकस्येति।** उक्तमेव प्रतिसंधानं पुनरिन्द्रियान्तरविकारद्वारेण दर्शयति सूत्रं यथा च प्रतिसंधानं देहेन्द्रियादिव्यतिरिक्तमात्मानं प्रतिपादयति तथा ऽत्र स्तादेव विवृतमित्याह। **उक्तन्यायमिति** ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥

मतिः स्मृत्यनुमानादिज्ञानम् । यद्यपि चेदं प्रातिस्विकसंस्कारादिकारणकं तथाप्यवश्यमेतेनेन्द्रियजेन भवितव्यं ज्ञानत्वाद्रूपादिज्ञानवदिति, तच्चेन्द्रियमसति चक्षुरादौ भावान्मतेश्चक्षुराद्यतिरिक्तं मन इत्युच्यते । ननु भवतु करणान्तरं मनः तत्तु कथमिन्द्रियान्तरसहकारि कथं चाणुपरिमाणमित्यत आह । **तच्च ज्ञानायौगपद्याल्लिङ्गमिति** ॥ १६ ॥ १७ ॥

वार्तिकं **यदि सर्वं विज्ञानं ससाधनमुच्यते मनस्यपीति** । ( ३६४ । १७ ) न च तत्र मन एव करणमात्मनि वृत्तिविरोधादिति तदन्यस्य करणत्वे तज्ज्ञानायापीन्द्रियान्तरमुपासनीयमित्यनवस्था, अनिन्द्रियजत्वे तु मतावपि संस्काराद्येव कारणमस्तीति कृतं मनसेति भावः । परिहरति । **ओमित्तीति** । यथा कारणसत्तया कार्यं जनितं कारणं ज्ञायते एवं मनःसत्तया मनोलिङ्गज्ञानं जनितं मनो ज्ञापयति । तच्च लिङ्गजं मनोज्ञानं मनःसत्ताहेतुकम् । न च स्वात्मनि वृत्तिविरोधः न हि मनःसत्तायां मनःकरणं मनोज्ञाने वा मनोज्ञानं करणं येन स्वात्मनि वृत्तिविरोधः स्यात् । केवलं वा मनः स्वज्ञाने करणं येनैकत्र कर्मकरणत्वे स्याताम् । अपि तु मनोज्ञाने लिङ्गज्ञानसहितं मनः करणं तत्स्वरूपं तु लिङ्गज्ञानसाहित्यादिति न स्वात्मनि वृत्तिविरोधः । नाप्येकस्यैव केवलस्य कर्मकरणभाव इति भावः । स्यादेतद् लिङ्गज्ञानसहितस्य मनसः करणत्वे मा भूदेकस्यैव कर्मकरणभावः स्वरूपेण कर्मत्वाद् लिङ्गज्ञानसाहित्येन च करणत्वात् । यदा तु योगिना प्रत्यक्षेण मनो गृह्यते तदा कथमेकस्य कर्मकरणभाव इत्यत आह । **यस्य तु मनः प्रत्यक्षमिति** ॥ १८ ॥

शास्त्रार्थभूताभ्युदयनिःश्रेयसोपयोगिनं परलोकं परिचिक्षिपुः परीक्षाहेतुभूतं संशयमाह । **किं पुनरयमिति** । (३६५ ।

८) अत्र वार्त्तिककारः संशयं दूषयन् प्रकरणान्तरारम्भमाक्षिपति। एतस्मिन्नर्थ इति। देहेन्द्रियबुद्धिवेदनाभ्यो व्यतिरिक्तत्वमात्मनो दर्शयता बाल्यकौमारयौवनवार्द्धकभेदे ऽपि चैकात्म्यप्रतिसंधानमर्थादुपपादयता शरीरनाशादूर्ध्वमात्मसद्भावो दर्शितः। तावता च नः प्रयोजनं तत्किमवशिष्यते यत्र संशयो यत्कृते च प्रकरणोत्थानमित्यर्थः। समाधत्ते। नानारभ्यमिति। सिद्धेऽपि देहादिव्यतिरेके बाल्यादिषु चानुगमे किमयमात्मा आ शरीरोत्पत्तेरा च प्रायणाद्यावद्देहसंतानभावी आहो स्विदुपरते ऽपि देहादिसंताने ऽनुवर्त्तत एवेत्येष विमर्शो ऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इत्यर्थः।

भाष्यं देहभेदादिति। ल्यब्लोपे पञ्चमी। बाल्यकौमारयौवनवार्धकदेहभेदमभिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः। वार्त्तिकम्। अभिप्रेतविषयप्रार्थनाप्राप्ताविति। अभिमतविषयप्राप्ताविति वक्तव्ये प्रार्थनाग्रहणम् इष्यमाणतमत्वं सूचयति। नेष्यमाणप्राप्तौ हर्षोऽपि त्विष्यमाणतमप्राप्तौ तेनाभिप्रेतविषयस्य प्रार्थनायां सत्यां प्राप्तावित्यर्थः। हानाशक्यतेति। (३६६।१)विषयेण विषयिणीं बुद्धिमुपलक्षयति। अनिष्टो विषयो मरणादिस्तस्य साधनमहिव्याघ्रादिस्तस्योपनिपातः सन्निधानं तस्मिन्सति व्याघ्रादिजिहासोरशक्यहानमेतदिति बुद्धिर्भयं सा हि कस्यापि जनयति। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तस्यैव पुरुषस्य यः प्राप्त्यशक्यः तत्र प्रार्थना शोकः य इष्टो विषयः प्राप्तुमशक्यस्तत्र प्रार्थना इदं मे उपपद्यतां भवत्विति इत्थंभूता चेयं प्रार्थना न स्वरूपेण शोक इत्यत आह। इष्टविषयवियोगे सतीति। अनर्हणेनेति यावत्। तदयमर्थः। इष्टवियोगे तत्प्राप्त्यशक्यताज्ञानं शोक इति।

अनर्हणेन प्राप्त्यशक्यताज्ञानं शोचतः सूचयति । **प्रत्यक्षबु-द्धिनिरोध** इति । प्रत्यक्षग्रहणेन ग्रहणमात्रमुपलक्षयति । **तद-नुगृहीतः** स्मृत्यनुगृहीतः । **तदनुसंधानविषय** इति । अनु-संधीयतइत्यनुसंधानं स्मृते यदनुसंधेयं तद्विषय इत्यर्थः । तथा ऽपि स्मृतिप्रत्यभिज्ञयोरविशेष इत्यत आह । **वर्त्तमानस्य वि-षयस्य दृश्यस्य तद्भावविषय** इति । दृष्टो हि निरालम्बनो बालः स्खलन्मातुरङ्कात्पतनस्यानिष्टसाधनत्वमनुस्मृत्येदं च पत-नमिति परामृष्य तस्यानिष्टसाधनत्वमनुमाय रुदन्मातुर्मङ्गल्यमुरः-सूत्रं विक्षिप्य हस्तौ वेपमान उपाददानः तस्यानया चेष्टया भयशोकावनुमीयेते इत्यर्थः ॥ १९ ॥

**दृष्टेन विशेषितत्वादिति** । ( ३६७।१४ ) दृष्टशब्देन विशेषितो व्यवस्थापितः कार्यकारणभावो न शक्यो व्युदासितु-मित्यर्थः । **अथात्मन उत्पत्तिनिरोधानुमानमिति** । यद्विका-रि तदुत्पत्तिनिरोधधर्मकं दृष्टं यथा पद्मं तथा चात्मा तस्माद-नित्य इत्यर्थः । यदि धर्मोपजननमात्रं विकारः स आकाशादि-ष्वपीत्यनेकान्तः धर्म्मधर्मिणोश्च भेदान्न धर्मोपजननापायौ धर्मिणि युज्येते इति नानित्यत्वानुमानं विकारात् । अस्माकं त्वात्मनि-त्यत्वेऽनुमानमस्तीत्याशयेन नित्यत्वानुमान माह । **तन्न युक्त-मिति** । **सर्वदाऽमूर्तत्वादिति** । घटादयो ऽप्येकस्मिन् क्षणे-भवन्त्यमूर्ताः परिमाणविशेषो हि मूर्त्तिः न च द्रव्यसमानका-लोत्पत्तिर्गुणानामिति तन्निवृत्त्यर्थं सर्वदेत्युक्तम् ॥ २० ॥

पद्मात्मकानां पद्मादीनां विकाराः पद्मात्मकाविकारा इति २१॥

**सामान्यतोऽधिगतस्य विशेषज्ञापनार्थमिति** । हर्षा-दिना सामान्यत इच्छामात्रमवगतं तद्विशेषस्तु स्तन्याभिलाषो रागश्चात्रोक्त इत्यर्थः ॥ २२ ॥

अय-णम् ( सू२३ ) ॥ न पूर्वाभ्यस्ततनुबन्ध एव प्रवृत्तिकारणम् । अयसोऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धो भवेज्जात्यन्धबधिरादयस्तज्जन्मानुभूतान् गन्धस्पर्शान् जात्यन्तरानुभूतान् रूपस्पर्शादीनपि व्याचक्षीरन्नित्यभिप्रायः । विकल्प्य दूषयति । किमिदमिति । ( ३६९ । २ ) यौवनाद्यवस्थायां चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसम्बन्धावगमाद् वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च य एकं स्मरति तेनापरमपि स्मर्तव्यमिति कश्चिन्नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादिभेदान् व्याचक्षीरन् अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अद्यत्वेऽपि चानुभूतेषु कस्य चिदेव स्मरत्यात्मा न सर्वस्येति ॥२३॥

भाष्यं न च स्तन्याभिलाषलिङ्गमन्यदिति । स्तन्याभिलाषो लिङ्गमस्य निमित्तान्तरस्य तत्तथोक्तम् । अन्यत्र लोष्टादौ लोष्टादेरिति यावत् । षष्ठीसप्तम्योरभेदार्थत्वात् । एतदुक्तं भवति लोष्टादेरन्यस्यायस्कान्तप्रवृत्त्यभावाद् अयसश्च सनिमित्तमुपसर्पणमिति पूर्वं व्याख्यातम् । संप्रति त्वन्यथा व्याचष्टे अयसः खल्वपीति । निपातसमुदायः कल्पान्तरं द्योतयति॥२४॥

पूर्वानुभूतविषयानुचिन्तनमिति । एकविषयः स्मृतिप्रवाहो विजातीयप्रत्ययासंभिन्नश्चिन्तनं, तच्चानुभवश्च पश्चाद्भवतीत्यनुचिन्तनं, न च तत्स्मृतिमन्तरेण भवति, न हि तत्र प्रवाहः प्रवाहिणं विनाऽस्ति तदेवानुचिन्तनं पूर्वानुभूतविषयप्रार्थनार्थः सङ्कल्पः प्रार्थना सङ्कल्पः स च पूर्वानुभूतविषय इत्यर्थः । अथा-

स्मिन्नेव जन्मनि इन्द्रियजो विषयानुभवोऽन्वयव्यतिरेकावधारिते-
ष्टोपायतासहकारी कस्माद् रागहेतुर्न भवतीत्यत आह वार्तिक-
कारः। न विषयावगमासमर्थेष्विति । तदनेन पूर्वानु-
भवश्च विषयाणामन्यस्मिन् जन्मनीति भाष्यं व्या-
ख्यातम् ॥ २५ ॥

अत्रायमुदितानुवाद इति भाष्यम्। तस्यार्थः उदित-
मिदं चोद्यम् अयस्कान्तदृष्टान्तेन चोद्येन, तथाऽपि तस्यानुवादो
निदर्शनार्थः। पूर्वमयस्कान्तो निदर्शनमिदानीं तु घटादीनामुत्प-
द्यमानानां रूपादयो निदर्शनमिति तदर्थमित्यर्थः। चोद्यस्यो-
दितानुवादत्वात्परिहारोऽप्युदितानुवाद एवेति। तन्मयत्वा-
द्राग इति। ( ३७० । ३ ) अभ्युपेत्यादृष्टकारणत्वं रागादीनां
परिहृतं परमार्थतस्तु तन्मयत्वाद्राग इत्यर्थः। स्यादेतद् यदि
पूर्वाभ्यस्तस्मृत्यनुबन्धाद्रागादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं
प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावानामानन्तर्यात्तदनु-
रूपा एव रागादयो भवेयुर्न करभभावानुरूपाः करभजातेरस्य
विजातीयजन्मसहस्रव्यवाहितत्वादत आह। जातिविशेषा-
च्चेति। कर्मणः संस्कारोद्बोधकत्वात्करभजात्यर्थेन कर्मणा जन्म-
सहस्रव्यवाहिताऽपि करभभावनोद्बोध्यते नानन्तराऽपि मनुष्य-
भावना प्रायणाभिभूतेति भावः ॥ २५ ॥

ननु सगुणद्रव्योत्पत्तिवदिति साधनपक्षे मा भूदनैकान्ति-
कापादनपक्षे तु को दोष इत्यत आह वार्तिककारः। अनैका-
न्तिकपक्षे सूत्रं न कस्मात् नोक्तोत्तरत्वात्। उक्तोत्तरमे-
तद्यत इति ॥ २६ ॥

अपि च मनुष्यत्वेन तुल्यत्वेऽपि प्रज्ञामेधाप्रकर्षनिकर्षभे-
ददर्शनात् प्राग्भवीयाभ्यासकल्पना अद्यत्वेऽपि हि शास्त्राभ्या-

सस्तद्गोचरप्रज्ञामभिवर्धयन्नन्वयव्यतिरेकाभ्यामनुभूयते सोऽयमिह जन्मन्यकृतशास्त्राभ्यासस्य तद्विषयः प्रज्ञामेधातिशयः प्राग्भवीयाभ्यासातिशयं स्वकारणमवगमयति, जनस्य तिर्यगादिजातिशतव्यवधानपरिम्लानप्राग्भवीयसंस्कारस्य प्रज्ञामेधानिकर्ष इति कल्पनीयं तस्मान्नित्यस्यात्मनः कर्माविद्यानिबन्धनोऽनादिरेषोऽनेकविधशरीरपरिग्रहपरित्यागप्रवाहोऽपवर्गान्त इति सिद्धम्॥२७॥

आत्मानन्तरमुद्दिष्टं शरीरं परीचिक्षिषमाणोऽवान्तरसङ्गतिमाह भाष्यकारः **अनादिश्चेतनस्य शरीरयोग** इत्युक्तम् । परीक्षोपयोगिनिर्वेदसाधनत्वमाह । **स्वकृतकर्मेति** । परीक्षापूर्वरूपं संशयमाह । **किं घ्राणादिवदिति** । एकद्वित्रिचतुःपञ्चप्रकृतिकतामास्थिषत शरीरस्य वादिनः सोऽयं संख्याविकल्पः ।

अत्र वार्तिककारः स्वातन्त्र्येण शरीरपरीक्षायां सङ्गतिमाह । **आत्मानन्तरमिति** । भाष्यमतेन सङ्गतिमाह । **अथ वेति** । अवान्तरसङ्गतेस्तात्पर्यमाह **तस्मिन् परीक्ष्यमाणइति** । मानुषं शरीरं पार्थिवं गन्धवत्त्वात् पार्थिवपरमाणुवदिति । न कारणं कार्यस्यात्मा तत्कथमेकात्मकमित्यत आह । **एकात्मकमित्येक**स्वभावं स्वो भावो भवितॄणां जातिः एकजातीयसमवायिकारणत्वे हि तत्तदेकजातीयं स्याद् नान्यथेत्यर्थः । परोक्तान् हेतूनन्यथासिद्धयिष्यन्प्रथमं तान्सुहृद्भावेनाह **नन्विदमबादिभिरि**ति । ( ३७१ । ३ ) परोक्तसाधनमन्यथासिद्धमुक्त्वा बाधकमुक्तं भाष्यकृता तदनुभाष्य वार्तिककारो व्याचष्टे । **तदिदमनेकप्रकृतीति** । पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात् । अयमभिसन्धिः पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः तयो रूपरसस्पर्शवत्त्वेन तदारम्भसम्भवेऽपि गन्धवत्त्वाभावप्रसङ्गात् । एवं पार्थिवाणुसमवेतस्य गन्ध-

स्यैकत्वेनानारम्भकत्वात् । नापि पार्थिवपरमाणुद्वयमेकश्चपाथसीयः परमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति साम्प्रतम् । परमाणूनां बहूनामनारम्भकत्वात् । तथा हि त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वाद् घटोपगृहीतपरमाणुप्रचयवत् । आरम्भकत्वे तेषां घटोपगृहीतानां कपालशर्कराचूर्णक्रमो घटनाशे नोपलभ्येत त्र्यणुके च विजातीयानारम्भकत्वे सिद्धे तेनैव दृष्टान्तेनान्यत्रापि विजातीयेनारम्भो निषेध्यः । एतेन पार्थिवावयवानां महतां पाथसीयैरवयवैः शरीरारम्भः प्रत्युक्तः विजातीयानामनारम्भकत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति । तदनेन वार्त्तिककृता षड्विंशतिकल्पा निराकृता इति । यदि पुनरेकैकं कारणं स्यात् ततः किं भवेदित्यत आह । एककारणत्वे त्विति । ( ३७२ । ६ ) नित्यं निरपेक्षमेकं कारणमिति सततोत्पत्तिः कार्यस्य भवेत् । कारणविनाशात्तद्विभागाद्वा द्रव्यं विनश्यति न चैकस्य कारणस्य नित्यस्य विनाशोऽस्ति । न च विभागः तस्य सद्वितीयवस्त्वाश्रयत्वात् । एकस्य च द्वितीयाभावात् । विनाशकारणाभावात्कृतककनित्यत्वप्रसङ्गरूपमसहायमेकमवयविनि न रूपमारभतइति नीरूपो ऽवयवी तथा च रूपसंस्काराभावेनावयवी नोपलभ्येतेत्यर्थः । स्मृतिरुत्पत्तिरित्यर्थः । न्यायसिद्धमर्थं श्रुतिरुपोद्बलयति न पुनरस्य प्रापिका सांख्यराद्धान्तावलम्बनेनास्यास्याः कथं चिदुपपत्तेः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

उद्देशक्रमानुरोधाच्छरीरानन्तरमिन्द्रियाणां परीक्षां प्रतिजानीते भाष्यकारः । अथेदानीमिन्द्रियाणि प्रमेयक्रमेणेति । तत्र परीक्षापूर्वरूपं संशयमाह । किमाव्यक्तिकानि आहो स्विद्भौतिकानीति । उपलक्षणं चैतत् । यदाऽपि भौतिकानि

तदापि किं कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियम् आहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः। विप्रतिपत्तेः संशयः। तत्र पूर्वः सांख्यनैयायिकयोर्विप्रतिपत्तेः। उत्तरस्तु सौगतनैयायिकयोरिति। आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम्। अहङ्काराद्धि बुद्धिविकाराद्वैकारिकादेकादशेन्द्रियाणि जायन्त-इति हि सांख्याः आव्यक्तिकत्वं त्वव्यक्तस्य मूलकारणत्वा-दुक्तम्। विप्रतिपत्तिबीजं पृच्छति। कुतः संशय इति विप्र-तिपत्तिमाह कारणे कार्योपचारात्। उत्तरं कृष्णसारे सती-ति। कृष्णसारे सत्युपलम्भात् कृष्णसारमेव चक्षुरिति बौद्धाः। व्यतिरिच्य चोपलम्भात् तदतिरिक्तं तच्चाहङ्कारि-कम्। अहङ्कारस्य विभुत्वेनाप्रतिघातात्। भौतिकत्वे काचा-भ्रपटलादिभिर्भौतिकैः प्रतिघातप्रसङ्गादिति सांख्याः ॥ ३३ ॥

तत्र सांख्यमुत्थाप्य बौद्धपक्षं दूषयति। अभौतिकानी-ति। कृष्णसाराधिकग्रहणे विवक्षिते ऽर्थग्रहणं संपातायातं न तु तदत्र विवक्षितम् असाधकत्वादिति। धाना अङ्कुरः ॥३४॥

नैयायिकः सांख्यं दूषयति ॥

रश्म्यर्थम् ( सू० ३५ ) ॥ आहंकारिकत्वे चक्षुर्न प्रति-हन्यते यदि तत् काचाभ्रपटलान्तरितप्रकाशवत् कुड्यान्तरित-मपि प्रकाशयेत्। न चैवमस्ति, तस्मात्कृष्णसाराधिष्ठानं तेज एव भौतिकं प्राप्य गृह्णाति कुड्यान्तरितं त्वर्थमप्राप्तं न गृह्णाति। काचाभ्रपटलान्तरितं तु वक्ष्यति।

वार्तिकं किमाव्यक्तिकानि ( ३७३ । १ ) तस्य व्याख्यानमाहंकारिकाणीति। न प्रदीपादिभिरने-कान्तादिति। वर्तिदेशस्थेन पिण्डितेन तेजसा प्रदीपेनानेका-न्तात्। प्रभा हि विसारिणी तमर्थं प्राप्य प्रकाशयति न तु

प्रदीप इत्यर्थः । विषयीभावादिति चेदिति । उत्पादाविशेष एव स तादृक् चक्षुरर्थक्षणयोर्यतो ऽप्राप्तयोरपि विषयविषयिभावाद्व्यवेदकत्वं, न चायं व्यवहितविप्रकृष्टयोरिति न तयोर्वेद्यवेदकभाव इत्यर्थः । निराकरोति नोक्तोत्तरत्वात् । स एवार्थो विप्रकृष्टो न विषयः सन्निकृष्टश्च विषय इत्येकस्य विषयीभावस्तदभावश्चायुक्तः क्षणभङ्गश्च निषेत्स्यत इति भावः ॥३४॥

अभौतिकत्वं तु व्यापकत्वादिति । (३७४।२) तद्यथा विज्ञानाद्यभौतिकं महच्चाणु च गृह्णातीत्यर्थः । एकदेशिमतेन दूषणमाह । न भौतिकेषु प्रदीपादिष्विति । ननु बुद्धिर्यदि महदण्वोः प्रकाशनं तत् किमिदानीं सर्वस्यैवाप्रकाशनमित्यत आह । अवधारितग्रहत्वर्थस्येति । न च हानोपादानोपेक्षाबुद्धयो ऽण्व्यो महत्यो वेति भावः । पूर्वपक्ष्याह नेन्द्रिये ऽपि समानत्वादिति । तदेवमेकदेशिना ऽसाधारणत्वापादने पूर्वपक्षिण्य दूषिते सिद्धान्त्याह । अभूतात्मकं व्यापकं चेति । सांख्यः शङ्कते । वृत्तिरिति । इन्द्रियाणां वृत्तयो ज्ञानहेतवः प्रतिविधन्तइत्यर्थः । युगपदनेकग्रहणप्रसङ्गाच्चेति । यद्यपि सांख्यीयराद्धान्ते दीर्घां शष्कुलीं भक्षयतो युगपदनेकज्ञानोत्पत्तिरभिमता तथाऽपि क्वचित् क्रमोऽपि दृश्यते स न स्यात् वृत्तिमतो ऽवस्थाने तदभिन्ना वृत्तिरप्यवतिष्ठतइति तन्मात्राधीनोत्पत्तीनां विज्ञानानां क्रमो न स्यादिति भावः । उभयं नेष्यतइति । (३७६।४) वृत्तिभ्योऽनन्यत्वं वृत्तिमतो नेष्यते नापि वृत्तीनामनन्यत्वं वृत्तिमत इत्यर्थः ॥ ३४ ॥

भूयोऽवयवसन्निकर्षानुग्रह इति । इन्द्रियावयवानामर्थावयवैः इन्द्रियावयवानामर्थेन अर्थावयवानामिन्द्रियेण इन्द्रियस्यार्थेनेति ॥ ३५ ॥

तदनुपलब्धेरिति । नोपलब्धिलक्षणप्राप्तमनुपलभ्यमानं शक्यमनुमातुं नरविषाणादीनामप्यनुमानप्रसङ्गादित्यर्थः ॥३६॥

परिहारः नानुमीयमानस्येति । सत्यमनुपलब्धिलक्षणप्राप्तमनुपलभ्यमानं न शक्यमनुमातुं न तु महत्त्वाद्येवोपलक्षणप्राप्तेरपि तु रूपविशेषोऽपि । न चासौ विशेष उद्भवसमाख्यातः कृष्णसाराधिष्ठानस्य चक्षुषोऽस्तीत्यर्थः ।

आचार्यदेशीयानां मतमाह । अपरेत्त्विति । (३७६ । १६) दूषयति । एवं तर्हीदमिति । यत्रोपलब्धिस्तत्रैतदिति सूत्रार्थः । ततो महत्त्वादिषु मध्ये यत्किं चिदेकं वक्तव्यं सूत्रकारेण यत्रोपलब्धिस्तत्रैतादित्यकस्मादेव सिद्धेरनेकोपादानवैयर्थ्यं तस्मात्तत्सम्भावनायोग्यताभिधानपदं सूत्रम् ॥ ३७ ॥

ननु यथाश्रुतं महत्त्वाद्युपलब्धिकारणमस्ति चाक्षुषस्य रश्मेरिति कस्मादयं नोपलभ्यत इत्यत आह । द्रव्यगुणधर्मेति॥३८॥३९॥

अनेकरश्मिसन्निधाने स्पर्शस्योद्भूतौ सत्यां द्रव्यं दृश्येत रूपोद्भूतौ सत्यां व्यवहितत्वादादौ निपातितेन चक्षुरन्तरेण द्रव्यस्यानुपलब्ध्या भवितव्यम् । शङ्कते कथानेकेति । ( ३७९।९ ) नानानयनावयवैरेकोऽसौ नयनावयव्यारभ्यतइत्यर्थः । निराकरोति एवं सतीति । नानानयनावयवैरारब्ध एकोऽसौ नयनावयवी समग्रासमग्रचक्षुःपुरुषसाधारण इत्युपलब्धिस्तुल्या स्यादित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

न हि यद्यस्याभिभावकं तत्तस्य व्यञ्जकमिति । ( ३८०।१७ ) रात्रौ यद् लोष्टतेजसां ऽभिभावकं दिवा कथं तदेवास्य व्यञ्जकं येन तदभावाद्रात्रौ लोष्टतेजो नोपलभ्येत इत्यर्थः । अपिशब्दादुगम्यत इति । न रात्रावपीति सूत्रमतादित्यर्थः ॥ ४३ ॥

सोऽयं चक्षुषो रश्मिः किमभावान्नोपलभ्यते किं वाऽनुद्भूतेरत्राह भाष्यकारः उपपन्नरूपा चेयमनभिव्यक्तितोऽनुपलब्धिरिति योजना। अनभिव्यक्तितोऽनुद्भूतेरित्यर्थः। अत्र हेतुर्बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेः विषयश्च स्वरूपमात्मनोऽन्यच्च। एतदुक्तं भवति यदुपलब्धौ बाह्यप्रकाशमनुग्रहकमपेक्षते तस्यानुद्भूतेरेवानुपलब्धिर्न त्वभिभूतेः यथा हेमन्ते विषक्तावयवस्याप्यस्य द्रव्यस्य। आप्यं हि द्रव्यं विषक्तावयवं स्वविषयोपलब्धौ बाह्यप्रकाशानुग्रहमपेक्षमाणं दृष्टं चक्षुरपि च विषयोपलब्धौ बाह्यप्रकाशमपेक्षते निरालोके तस्याप्रवृत्तेः। तस्माद्विषयोपलब्धौ बाह्यप्रकाशापेक्षत्वात्तदनुद्भूत्या न प्रतीयते न पुनरभिभूत्येति सिद्धं प्रकृतम्। तदेतद्वार्तिककारो व्याचष्टे। तस्य विद्यमानस्येति ॥ ४४ ॥

कस्मात्पुनर्नायनस्येति। अत्रोत्तरम् ॥

अभि-त् ( सू० ४५ ) ॥ अभिभवनीयस्य रूपमाह। यदुद्भूतरूपमिति। ( ३८१।७ ) तद्वैधर्म्यमनुद्भूतरूपस्याह। अनुद्भूतरूपश्चेति। अनुद्भूतरूपस्याभिभवाभावे निदर्शनमाह। यदनुद्भूतरूपमिति। बाह्यप्रकाशानुग्रहापेक्षस्य चाभिभवाभावे निदर्शनमाह। यच्च बाह्यप्रकाशानुग्रहापेक्षमिति। कृष्णसारं रश्मिमदित्युच्यमाने प्रसन्नान्धस्यापि कृष्णसारं रश्मिमत्साध्येत तथा चापसिद्धान्त इत्यत आह। विप्रतिपत्तिविषय इति। तेन विप्रतिपत्तिविषयः कृष्णसारं रूपं च रश्मिमदिति साध्यनिर्देशः। उपलब्धौ निमित्तत्वादित्युच्यमाने गन्धादिभिरनैकान्तिकं स्यादत उक्तं रूपोपलब्धाविति। रूपसाक्षात्कार इत्यर्थः। तथाऽपि सन्निकर्षादिभिरनैकान्तिकमत उक्तं द्रव्यत्वे सतीति। तथाऽपि मनसाऽनैकान्तिकमत उक्तं

नियतस्य साधनाङ्गस्येति । असाधारणस्य साधनाङ्गत्वे सतीति । मनसस्तु साधारणस्य साधनाङ्गस्य रूपोपलब्धौ निमित्तत्वम् । साधनं समुदायस्तदङ्गमवयवः । अथ चेति । द्रव्यत्वे सति नियतत्वे चार्थप्रकाशकत्वादित्युच्यमाने घ्राणादिभिरनैकान्तिकं स्यादत उक्तं स्फटिकादिव्यवहितेति ॥ ४५ ॥

मानुषं चक्षूरश्मिमदिति । रूपाद्युपलब्धिनिमित्तत्वादिति सावधारणं रूपादीनामेवेति । तेन न मनसाऽनैकान्तः । तथाऽपि सन्निकर्षेणानैकान्त इत्यत उक्तमप्राप्तिस्वभावत्व इति । इतश्च भौतिकानीन्द्रियाणि चक्षूरसनत्वग्घ्राणानीत्यर्थः । तथाऽपि श्रोत्रस्य रूपं न ज्ञायते कीदृशं तदित्यत आह । भूतं श्रोत्रम् । ( ३८२।३ ) अर्थप्रकाशकत्वादित्युच्यमाने मनसाऽनैकान्तिकमत आह प्राप्तेति । न हि रूपादिभिः सहास्ति मनसः प्राप्तिस्तथाऽपि मनस्येवानैकान्तः आन्तरं हि दुःखादि मनः प्राप्य प्रकाशयत्यत आह बाह्येति । तथाऽपि सन्निकर्षादृग्रादिभिरनैकान्तोऽत आह । द्रव्यत्वे सतीति । शङ्काभाष्यं जातिभेदवदिन्द्रियभेद इति चेत् । निराकरोति धर्मभेदमात्रं चानुपपन्नम् । वृषदंशनयनस्य रश्मिमत्त्वं मानुषनयनस्य तु न तत्त्वमिति योऽयं धर्मभेदः स एव मात्रं तच्चानुपपन्नम् । चोऽवधारणे भिन्नक्रमः । अनुपपन्नमेवेति योजना । कुतोऽनुपपन्नमित्यत्र हेतुमाह आवरणस्येति । यथा हि धूमवत्त्वं पर्वते रसवत्त्वां चान्यत् तथाऽप्येष विशेषोऽस्याग्निमत्त्वानग्नित्वे प्रत्यप्रयोजकः । एवं विडालत्वमनुष्यत्वे अप्रयोजके इत्यर्थः॥४६॥४७॥४८॥

सोऽप्रतिहन्यमान इति । स रश्मिरप्रतिहन्यमानः काचेन काचं व्यतिभिद्यार्थेन सम्बध्यते काचान्तर्गतेन ॥ ४९ ॥

वार्तिकम् अव्यूह्यमानावयवद्रव्यानुप्रवेश इति ।

( ३८३।१० ) यस्य द्रव्यस्य भर्जनकपालादेरवयवा न व्यूह्यन्ते पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्यान्तरजनकसंयोगोत्पादनं व्यूहनं तन्न क्रियन्ते तस्य द्रव्यस्य भर्जनकपालादेरव्यूह्यमानस्यावयवव्यूहनमवयविनोऽपीति अव्यूह्यमानस्येत्युक्तम्। तस्य भर्जनकपालादेरन्तरावयवैर्योऽभिसम्बन्धो वह्नेः सोऽप्रतिघातः। एतदुक्तं भवति सान्तरत्वादवयविद्रव्याणां तदविनाशेनाग्नेर्योऽनुप्रवेशः सोऽप्रतिघात इति। प्रवेशेऽप्रतिघातमुक्त्वा निःसरणे ऽप्यविघातमाह। अन्तरवस्थितस्य वा द्रव्यस्य मधूदकादेर्बहिरवस्थितहस्तादिप्राप्तिः तस्य कीदृशस्य बहिरित्यत आह। अव्यूह्यमानावयवस्य शलाकादेस्तस्य बहिरिति ॥ ५० ॥ ५१ ॥

द्रव्यान्तरासंपृक्तद्रव्यसमवायः स्वच्छत्वेत्यर्थः। प्रसङ्गात्प्रतिबिम्बभ्रमोत्पादक्रममाह। आदर्शादिष्विति। ( ३८४।१० ) यदभिमुखमग्रमिति। द्रष्टुः पुरुषस्याभिमुखं नयनरश्मेः परावृत्तस्याग्रं तदभिमुखं मुखादि पश्यति। सारूप्यनिबन्धनत्वाद्विभ्रमाणां सारूप्यमिहाप्याह। यथा ऽग्रतो ऽवस्थितस्य पुरुषस्य मुखं लोचनरोचिरभिसम्बन्धमभिमुखमेवमेतदिति। नन्वादर्शप्रतिहतश्चेद् नयनरश्मिः परावृत्तः कथं पश्चादभिमुखविभ्रमहेतुः हन्त भोः पातमात्रादादर्शज्ञानेन भवितव्यं पश्चात्प्रतिबिम्बविभ्रमेण, न चैवमस्ति यौगपद्यप्रतिभासादित्यत आह। आदर्शेति। कुतस्तर्हि मणिकृपाणादेर्दर्पणतलेषु नानानिर्भासः प्रतिबिम्बावभास इत्यत आह आदर्शरूपानुग्रहादिति ॥ ५२ ॥ ५३ ॥

संप्रति तथावेन्द्रियाणामेकानेकत्वे परीक्षिषुः संदिग्धे।

अथापि खल्वेकमिति । प्रश्नपूर्वकं सूत्रमवतारयति । कुतः संशयः ॥

स्थाना—यः ( सू. ५४ ) ॥ तत्र केचिदिदं सूत्रं भाष्यमतानपेक्षं यथाश्रुति व्याचक्षते । तद्दूषणपुरःसरं भाष्यव्याख्यानं ग्रहीतुं यथाश्रुति व्याख्यानं परेषां सूत्रपाठपूर्वकमुपन्यस्यति । एके त्विति । ( ३८५ । १३ ) अनुपपन्नरूपश्चायमिति । अत्र हि यथाश्रुति स्थानान्यत्व इति निमित्तसप्तम्या नानात्वस्य बीजं स्थानान्यत्वमुक्तं न त्वेकत्वस्येति । एकत्वस्य तु बीजं नानास्थानत्वं यथोक्तम् । अवयविनानास्थानत्वादिति । अवयवीत्येकत्वमुपलक्षयति । स्थानान्यत्वं च स्थानस्यान्यत्वमुच्यते । नानास्थानत्वं च नानास्थानानि यस्येत्यन्यपदार्थः स्थानान्यत्वादन्यः न तु धर्मद्वयं साक्षात्संशयकारणमित्येकतरस्यैकानेकसाधारण्यं वाच्यम् । तत्र यदि तावदेवं क्रियते संशयः स्थानान्यत्वे नानात्वैकत्वदर्शनादिति । यदा सूत्रार्थालोचनेनैकत्वे स्थानान्यत्वस्यादर्शनान्न समानधर्मः सूत्रं खल्वेकत्वे नानास्थानत्वमाह न स्थानान्यत्वम् । अनेकत्वमात्रे हि तदुक्तं सूत्रकारेण स्थानान्यत्वे नानात्वादिति । अथ नानास्थानत्वे सत्येकत्वानेकत्वदर्शनात्संशय इति एतद् दूषयति । तदा द्रव्यं नानास्थानमनेकं न किंचिद् दृष्टं सूत्रम् । अवयविनानास्थानत्वादिति सूत्रं नानास्थानत्वेनैकत्वमाह न तु नानात्वमपि यत्पुनर्घटाद्यनेकं न तन्नानास्थानमुक्तं सूत्रकृता । अपि तु स्थानान्यत्वं सूत्रकृतोक्तं स्थानान्यत्वे नानात्वादित्यनेन दूषणमुपसंहरति । सोऽयं संशय उभयथाऽनुपपन्न इन्द्रियेषु यथाश्रुतसूत्रपरिग्रहेण उभयथा स्थानान्यत्वेन नानास्थानत्वेन चेत्यर्थः । तदेवं परव्याख्यानं दूषयित्वा भाष्यकारीयस्य व्या-

ख्यानस्य युक्तत्वमाह स्थानेषु तु युक्तः। स्थानेष्विति निमित्तसप्तमी नानास्थानत्वनिमित्त इन्द्रियेष्वेकत्वानेकत्वसंशयो युक्तः नानास्थानं खल्वेकमवयविद्रव्यं दृष्टमनेकं च भिन्नभाजनगतं फलमिति। इन्द्रियविषयं नानास्थानत्वनिमित्तकं संशयमाह। किं नानास्थानानीन्द्रियाणि उत नानास्थानमेकमिन्द्रियमिति। तदिदमुक्तं भाष्यकारेण बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते नानास्थानश्च सन्नेको ऽवयवी च। तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति। सूत्रेऽपि स्थानान्यत्वे इत्यनेन नानास्थानत्वमेवोपलक्षणीयमित्यविरोधः। यथाश्रुतस्तु न सूत्रार्थ इत्याह। इन्द्रियेषु तु न स्थाननानात्वात्सम्भवति। न च नानास्थानत्वादिति। (३८६।१) किं त्विन्द्रियविषयो नानास्थानत्वादेव संशयो भाष्यकारीयः साधीयानित्यर्थः। तदेवं परोक्तं संशयबीजं दूषयित्वा भाष्यकारीयं संशयबीजं दर्शयित्वा वार्त्तिककारः स्वातन्त्र्येण संशयबीजमाह। शरीरव्यतिरेकित्वात्सत्त्वाच्च संशय इति॥५४॥

पूर्वपक्षं गृह्णाति।

त्वग–त् ( सू० ५५ )॥ कः पुनरव्यतिरेक इति। घटादिप्राप्तं चक्षुस्त्वचो व्यतिरिच्यतएवेति भावः। उत्तरम्। सर्वाधिष्ठानसम्बन्ध इति। सौत्रस्याव्यतिरेकशब्दस्य व्याख्यानान्तरमाह। सति भावो वेति। तदनेन यस्यां च सत्यामिति भाष्यं व्याख्यातम्। वा विकल्पार्थः। सिद्धान्तभाष्यं नेन्द्रियेति। लोकाविरोध इति। लोक्यते ज्ञायतेऽनेनेति लोकः प्रमाणं तद्विरोध इत्यर्थः। अनेकेन चानिन्द्रियेणेति। शरीरं पार्थिवं भूतान्तरसम्पृक्तं च तदिन्द्रियाधिष्ठानानि शरीरावयवभूतानि पृथिव्यादिना व्याप्तानीत्यनेकान्तः।

न व्याघातादिति । परदोषोद्भावनपरं न पुनस्त्वमवयवत्व-मिन्द्रियान्तराणामभिमतमिति ॥ ५५ ॥

एवं भाष्यकारीयसिद्धान्तमुक्त्वा सौत्रसिद्धान्तमाह । सूत्रेण चाभिसम्बन्धः सिद्धान्तस्य ॥ ( ३८७।८ )

न यु-ब्धेः ( सू० ५६ )॥ नैतदस्त्येकमिन्द्रियमिति । क-स्मात्? युगपदर्थानुपलब्धेरिति । तदेतत्सूत्रं भाष्यदृष्ट्या व्या-चष्टे वार्त्तिककारः । यस्यैकमिन्द्रियमिति । तदेतद्व्याख्यानं दूषयति । नैकेन्द्रियव्याख्यानमिति । भाष्यव्याख्यानं दूष-यित्वा सूत्रमन्यथा व्याख्यातुं भूमिरचनां करोति । एवं ब्रुवाण एकेन्द्रियवादीति ॥ (३८८।५) सामि-अर्धम् । एकमपीन्द्रि-यमर्धं प्राप्य गृह्णाति अप्राप्तं चार्थमेकदेश इति यावत् । करणधर्म-मतिक्रामन्तं प्रति युगपदुपलब्धिप्रसङ्गो दूषणमित्यर्थः ॥ ५६ ॥

एकत्वप्रतिषेधादेव पारिशेष्यान्नानात्वं सेत्स्यतीत्यत आह नासाधना क्रियेति । ( ३८९ । ७ ) एकत्वं च कथमि-ति । न शक्यः पक्षो दूषयितुमित्युक्तम् । पृच्छति । कथं तर्ही-ति । उत्तरम् । प्रतिषेधाच्चानन्तरमिति । यद्यप्यनन्तर-शब्दप्रयोगे पञ्चमी न स्मर्यते तथाऽप्यन्यशब्दस्याध्याहारेण पञ्चमी व्याख्येया । अनन्तरं प्रतिषेधादन्यः स्थापनाहेतुरिति योजना । अथ वेति । व्यतिरेकी हेतुर्द्वयोर्विरुद्धयोरेकतरनिषे-धेनैकत(नी)रं व्यवस्थापयति । यथा नैरात्म्यनिषेधेन जीवच्छरी-रस्य सात्मकत्वमिति ॥ ५७ ॥

इन्द्रि- (सू.५८) ॥ सूत्रमाक्षिपति । इदं तु सूत्रमिति । एष न्यायो मया वाचो भङ्ग्या सूत्रित इत्यर्थः ॥ ५८ ॥

पूर्वपक्षिणः सूत्रम् ।

न त-त् (सू.५९) ॥ पूर्वपक्षमाक्षिपति न विरोधादि-

ति । पूर्वपक्षिणः समाधानं नासाधनादिति ॥ ५९ ॥

सिद्धान्तः—

गन्ध—घः (सू.६०) ॥ ६१ ॥

यस्याधिष्ठानं भिन्नमिति । ( ३९१।१० ) भिन्नं नियतम् । एतदुक्तं भवति रूपव्यञ्जकस्य कृष्णसारमेवाधिष्ठानं न कर्णशष्कुल्यादि एवमन्यत्रापि द्रष्टव्यम् । यस्य पुनः सिद्धान्तिनो ऽधिष्ठानाभेदस्तथा च तदाधिष्ठानस्येन्द्रियस्यापि भेदः तस्यैकाधिष्ठानविनाशेन तद्गतस्येन्द्रियस्य विनाशेऽप्यधिष्ठानान्तराश्रितस्येन्द्रियान्तरस्यावस्थानमिति नैकाधिष्ठाननाशे सर्वाधिष्ठाननाशात्सर्वेन्द्रियनाशलक्षणः तथैकाधिष्ठानावस्थाने सर्वेन्द्रियावस्थानलक्षणो दोष इति । इष्टानिष्टोपेक्षणीय इति । उपेक्षणीयस्यापि पुरुषार्थत्वं भवति केन चित्प्रकारेण, यदि हि तत्र पुरुषः प्रवर्तेत ततो निष्फले कर्मणि प्रवृत्तः पुरुषस्तप्येत। दुःखं कर्मेत्यनुभवो लोकस्य, उपेक्षणीयत्वे तु तन्न तस्य भवति ॥६०॥६१॥६२॥

तत्र पार्थिवं घ्राणं रूपरसगन्धस्पर्शेषु नियमेन गन्धस्य व्यञ्जकत्वाद् बाह्यपार्थिववदिति । यथा हि मृगमदगन्धव्यञ्जकाः कुक्कुटोच्चारादयः पार्थिवा इत्यर्थः । न चातपेनानेकान्तः । न ह्यातपो गन्धव्यञ्जको ऽपि तु जलाभिभूतो गन्धो द्रव्याणां नोपलभ्यते केवलं जलमातपो ऽपनयति न तु गन्धं द्रव्यस्याभिव्यनक्ति तस्मान्नानेकान्तः । एवं रसनमिन्द्रियमाप्यं गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वाद् दन्तान्तरस्यन्दमानोदकबिन्दुवत् । न खलु विशुष्यदास्यो मोदकादिरसमनुभवति । एवं तैजसं चक्षुः गन्धादिषु मध्ये नियमेन रूपस्य व्यञ्जकत्वात् प्रदीपादिवत् । एवं वायवीयं त्वगिन्द्रियं गन्धादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् स्वेदोदबिन्दुशीतस्पर्शव्यञ्जकव्यजनप-

चनवत् । नियमग्रहणं मनोनिवृत्त्यर्थम् । मध्यइति चावधारणासि-द्ध्यर्थम् । अन्यथा घ्राणादीनां गन्धत्वादिव्यञ्जकत्वेनावधारणं न स्यात् । तदेतदाह । एवं शेषेष्विवति । ( ३९२ । १९ ) एवं चेन्द्रियपञ्चत्वेन हस्तपायूपस्थवाचामिन्द्रियत्वनिषेधो ऽपि सूचित इन्द्रियलक्षणविरहात् । यच्छरीरसंयुक्तं संस्कार(क)दोष-व्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रि-यलक्षणं, न चैतदस्ति हस्तादिषु । तज्ज्ञानेन्द्रियाणां ल-क्षणमिमानि कर्मेन्द्रियाणीति चेत् । हन्तैषामिन्द्रियत्वलक्षणान्तरं वक्तव्यम् । शरीराश्रितमसाधारणकार्यकारीन्द्रियमिति लक्षणमि-ति चेत् । वक्तव्यमेषामसाधारणं कार्यम् । उक्तं वचनादानवि-हरणोत्सर्गानन्दाः पञ्चानामिति । नन्वादानविहरणोत्सर्गा-स्तावद्वक्रहस्तादिभिरपि शक्याः कर्तुम् । अपि चास्ति कण्ठहृ-दयामाशयपक्वाशयादीनां गिरणादितवदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन्निति तस्माद्यत्किंचिदेतदपीति ॥६२॥

क्रमप्राप्तमर्थलक्षणं परीचिक्षिषमाणो ऽर्थलक्षणं स्मारयति । गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टमिति । लक्षितमिति वक्तव्ये संमुग्धाभिधानं सामान्यादुद्दिष्टमित्युक्तम् । तत्र परीक्षा-मुखं संशयमाह । उद्देशश्च नियोगेति । नियोगादीनां रूपमाह । तत्र नियोग इति । तदेवं विमृष्य नियोगसमुच्चयौ परित्यज्य विकल्पमालम्बते सूत्राभ्यामतो विशेषणार्थमिति । (३९३ । २)

गन्ध—व्याः ( सू. ६४ ) अप्—रः ( ६५ ) ।

विशेषणार्थमिति । सूत्रयोस्तात्पर्यमुक्तं तदेवं स्फुटय-ति । नियमार्थे इति । उत्तरेष्वबादिष्वेकैकशो ऽपकर्षो गन्धादीनां स्पर्शपर्यन्तानाम् । तथा हि चतुर्षु गन्धाप-कर्षोपलक्षितस्य गन्धस्य पुनरुद्भवो नास्तीति अद्भ्य

उत्तरे तेजसि रसस्यापकर्षः । एवमपकृष्टयोश्च गन्धरसयोः पुन-रुद्भवो नास्तीति तेजउत्तरे वायौ रूपापकर्ष इति । एवमपकृष्टानां गन्धरसरूपाणां पुनरुद्भवो नास्तीति वायोरुत्तरस्मिन्नाकाशे स्पर्श-स्यापकर्षः । तदिदमुक्त मेकैकशः इति । अभ्युत्पन्नो ऽयमुत्तरश-ब्दो ऽनन्तरवचनः तेन बहूनां निर्द्धारणे ऽप्युपपन्नार्थ इति । भव-तु वा तरब्निर्देशः तथा ऽपि न दोष इत्याह । भवतिविति । क्व-चित्पाठस्तन्त्रं वेति यथाभाष्यम् स्फुटार्थ एव ॥६४॥६५॥

पूर्वपक्षी नियोगपक्षमुत्थापयति ।

न स-ध्येः ( सू. ६६ ) ॥ पृथिव्यादिप्रकृतीनां घ्राणा-दीनां गन्धादिप्रतिव्यक्तिनियम एवमुपपद्यते यदि गन्धमात्रगु-णा पृथिवी रसमात्रगुणा आप इत्यादि न त्वन्यथा । अन्यथा तु पार्थिवेन घ्राणेन गन्धवद्रसरूपस्पर्शा अपि व्यज्येरन् अविशेषा-दित्यर्थः ॥ ६६ ॥ ६७ ॥

विष्टं ण (सू० ६८)॥ संसर्गस्य आश्रयत्वे ऽपि न द्वये स-मानत्वं यथा ऽग्निधूमयोः संबन्धो न्यथाऽग्नेः स हि व्यापको धूमे धूमध्वजस्य भाव एव नाभावः । धूमस्तु व्याप्यः तस्य वान्हावेव भावो नान्यत्रेति । एवमपरं पृथिव्यादि परेणाबादिना विष्टं व्याप्तं नाबादिमन्तरेणास्ति पृथिवी । तेन पृथिव्यामबादिगु-णानां रसादीनां नियमेनोपलम्भो न त्वबादिषु पृथिवीगुणाना-म् , एवमप्स्वनलादिगुणो व्याख्यातः । विष्टत्वं संयोगविशेषो व्याप्तिरित्यर्थः । भाष्यं तच्चैतद्भूतसृष्टाविति । भूतसृष्टिप्रति-पादकेषु पुराणेषु । नैतर्हीति । नेदानीमननुभवादित्यर्थः ॥६८॥

सिद्धान्ती विकल्पबाधेनैतद् दूषयति ।

नपा-न्नु ( सू. ६९ ) ॥ त्रिविधं हि द्रव्यं चाक्षुषमिष्यते पार्थिवमाप्यं तैजसं च । तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्याद्

नेतरद् रूपवत्त्वात्। न च रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोरिति वाच्यम्। नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात्। अस्ति हि रूपवता तेजसा तयोः संयोग इति। अथ वा पार्थिवाप्यसंबन्धिनो रसभेदस्य रूपभेदस्य चैकानेकविधत्वेन प्रत्यक्षत्वादित्याह भाष्यकारः। रसयोर्वेत्यादि नोपपद्यत इत्यन्तेन। पुनरस्यैव व्याख्यानान्तरमाह। स्पर्शयोरिति। पार्थिवाप्ययोरित्यस्योदाहरणमात्रार्थत्वात् पार्थिवतैजसयोरित्यपि व्याख्यानमुक्तम्। व्याख्यानान्तरमाह। अथ वेति। कार्यस्य व्यवस्थितगुणस्य दर्शनात् कारणमपि व्यवस्थितगुणमनुमीयते। न च सर्वत्र संसर्गो येनान्यस्य गुणोऽन्यत्रोपलभ्यते विवेकस्यासंसर्गस्य दर्शनात्। व्याख्यानान्तरमाह। दृष्टश्चेति। चो विकल्पार्थः। नियोगस्तु निरनुमान इत्याह। निरनुमानं तु विष्टं ह्यपरंपरेणेत्येतादिति। नियमो गन्ध एव पृथिव्यामित्येवमादिः। तस्य कारणं प्रमाणं नास्ति तद्बाधकस्यैव प्रमाणस्योक्तत्वात्। तस्माद्भूतसृष्टिः कथंचिदुपचारतो व्याख्येयेति। विष्टत्वं संयोगः स च द्वयोः समान इति। अन्यगुणो यदन्यत्रोपलभ्यते तत्किं संयोगादाहो स्विद्व्याप्तेः, यदि व्याप्तेः नायोगोलके वह्निसंपृक्ते वह्निगुणा गृह्येरन्। तयोर्व्याप्यव्यापकभावाभावात्। धूमे च गगनतलावलम्बिनि भूमिष्ठेन वह्निना व्याप्तेरग्नेर्गुणा गृह्येरन् तयोर्व्याप्यव्यापकभावात्। तस्मादन्यसंयोगो हेतुः स चोभयोरविशिष्ट इति तेजसा संयुक्तस्य वायोरपि रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इति॥ ६९॥

पूर्व-नम् (सू. ७०)॥ प्रधानतापदार्थं व्याचष्टे भाष्यकारः विषयग्राहकत्वं गन्धादिर्विषयः। तदेव विषयग्राहकत्वं कुतस्तत्राह। गुणोत्कर्षात्तदभिव्यक्तिसामर्थ्यात्। विषयग्राहकत्वं

चेत्प्राधान्यं तत्सर्वेषामेवेन्द्रियाणां विषयग्राहकत्वादित्याशयवान् वार्त्तिककरो भाष्यकारीयं व्याख्यानममृष्यमाणः पृच्छति। का प्रधानता ( ३९५ । ८ ) । स्वमतेनोत्तरमाह । चतुर्गुणत्वादिरिति । एतदुक्तं भवति यस्माच्चतुर्गुणत्वेन पार्थिवं घ्राणं रसनादिभ्य आप्यादिभ्यः प्रधानं तस्मादस्यागन्धवत्त्वं नास्ति येन गन्धं न गृह्णीयात् । न न्वेवं रसवत्त्वादिकमप्यस्ति घ्राणस्येति रसादिकमपि गृह्णीयादत उक्तं गुणोत्कर्षादिति । सर्वेषां समवायाविशेषे ऽपि गन्धस्यैव घ्राणउत्कर्ष इति गन्धमेव गृह्णाति तेनागन्धवत्त्वनिषेधपरं प्रधान्याभिधानं न पुनर्गन्धग्रहणे गन्धवत्त्वं प्रयोजकमपि तु गन्धस्योत्कर्ष इति सिद्धम् । तत्रोत्कर्षपदार्थं पृच्छति वार्त्तिकारः को गुणोत्कर्षः । उत्तरं स्वगुणाभिव्यक्तिसामर्थ्यं स्वो गुणो घ्राणस्य गन्धः तज्जातीयश्चन्दनादिसमवेतो ऽपि गन्धः स्व इत्युच्यते । न पुनः स्वगुणमेवाभिव्यनक्ति घ्राणं घ्राणसमवेतस्य हि गन्धस्यादृष्टवशात्तादृशो निर्माणभेदो येन सजातीयं चन्दनादिसमवेतं गन्धमभिव्यनक्ति यथा मृगमदादिगन्धं पार्थिवद्रव्यान्तरसमवेतो गन्ध इति । अत एवाह येन गुणेन यद् द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वादुत्कृष्टो भवति । तस्मिन् द्रव्यइति शेषः। यः पुनर्गन्धगुणत्वादिति । गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं न तु गन्धस्योत्कर्षादित्यर्थः। तस्य वादिनःसर्वेषामेव पार्थिवानां गुणानामुपलब्धिप्रसङ्गः घ्राणग्राह्यत्वप्रसङ्ग इत्यर्थः॥७०॥

ननु भवतो ऽपि कुतो व्यवस्थितिरिति सूत्रमवतारयितुं पृच्छति । कस्मात्पुनरिति ।

तद्व्य-स्त ( सू. ७१ ) ॥ अर्थनिर्वृत्तीति । अर्थः पुरुषार्थः । प्रविभक्तस्येति । इतरेभ्यो विशिष्टस्य । संस्कारका-

रित इति। अहङ्कारित इति। ॥ ७१ ॥ ७२ ॥

शङ्कते। यदि पुनरिन्द्रियस्य गन्ध इति (३९६ । ६) निराकरोति। तेनैव तस्येति। तदेतद्दूषणकवाक्यं सोपस्कारं व्याचष्टे। यदीन्द्रियं स्वगन्धं गृह्णीयात्ते तत्र दर्शने नासावैन्द्रियगन्धः, अथेन्द्रियगन्धस्ततो नेन्द्रियग्राह्यः स्यात्। कस्मान्नेन्द्रियग्राह्य इन्द्रियगन्ध इत्यत आह। गन्धं च गृह्णदिति। चो हेत्वर्थे। न चात्मसाधनं करणमस्तीति मनस्तु लिङ्गवदात्मनि करणं न केवलमित्युक्तम्। तुल्यत्वमापादयितुं सिद्धान्ती पूर्वपक्षिणमनुयुङ्क्ते कस्मात्पुनरिदं न चोद्यत इति। पूर्वपक्ष्याह न चोद्यत इति। सिद्धान्तवाद्याह तुल्यं घ्राणेन स्वस्य गन्धस्याग्रहणमिति। तुल्यतामेवापादयति एतदप्यंदर्शनीयमिति ॥ ७३ ॥ ७४ ॥

तद्गुणत्वमेव ( ३९७ । ११) शब्दगुणत्वमेव दिक्कालयोरिति चेद् नाम्नि विवादः दिक्कालयोर्हि शब्दगुणत्वे सत्यसाधारणयोगित्वेन न परापरव्यतिकरकारणत्वं पृथिव्यादिवद्भवितुमर्हतीति। तथा च शब्दगुणं परापरप्रत्ययकारणं चाकाशमेवेति नाम्नि विवादः। दिक्कालौ तु परापरव्यतिकरकारणे कल्पनीयौ तेन व्यतिरिक्तावित्यर्थः। अपि चाकाशमिच्छत आकाशप्रत्याख्यानं च सामर्थ्यानुपलब्धेरिति। रूपादिसाक्षात्कारे हि इन्द्रियाणामिन्द्रियत्वमेव स्वरूपसामर्थ्यं तच्चक्षुरादिद्रव्यस्य दृष्टं न गुणादीनामित्यर्थः ॥७५॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां तृतीयाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

*परीक्षितानीन्द्रियाण्यर्थाश्च बुद्धेरिदानीं परीक्षाक्रमः। क्रमः स्थानं। वृत्तवर्त्तिष्यमाणानुकीर्त्तनं हेतुहेतुमद्भावज्ञापनार्थम्। अर्थेन्द्रियपरीक्षा च बुद्धिपरीक्षणं (च) यथोपयुज्यते तथा बुद्धिपरीक्षायामेव स्फुटीभविष्यति। संशयमाक्षिपति। अनुपपन्नश्च इति। (३९८। १२) यदुपलब्ध्यानज्ञानविषयः संशयः सोऽनुपपन्नः सांख्यानामपि तदनित्यत्वस्याभ्युपगमात्। अथ सांख्याभिमतमहत्तत्त्वविषयः तस्य सत्त्वएव विप्रतिपत्तिरिति कुतस्तद्गतधर्मविचारः सति धर्मिणि धर्माश्चिन्त्यन्ते न सन्दिग्धसत्त्वाइति भावः। समाधत्ते दृष्टिप्रवादेति। सांख्यानां हि दर्शने प्रवादो महदन्तः करणं बुद्धिरिति तदुपालम्भार्थं दूषणार्थं प्रकरणमिति। अयमभिप्रायः नेह नित्यानित्यविचारोऽपि त्वनया द्वारा वृत्तेरतिरिक्ता सांख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण। यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयव्ययवतीभ्यो ऽतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात्। अथ तु नित्यत्वसाधनानि प्रतिसन्धानादीनि न बुद्धिनित्यत्वस्येक्षन्ते ततो वृत्तय एव बुद्धयो न तु तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति सिध्यति बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति बुद्धेर्लक्षणं तथा चास्य लक्षणे सङ्गतिः इतरथा तु प्रधानतो नित्यानित्यत्वविचारो न लक्षणेन सङ्गच्छतइति ॥ १ ॥

साधनं च प्रचक्षते। विषयप्रत्यभिज्ञानादिति। (३९९। ३) वृत्तिमान् किल विषयं प्रत्यभिजानन्नात्मानमपि प्रत्यभिजानाति। नं च चेतनो वृत्तिमान् तस्य कूटस्थनित्यत्वात्। अन्यथा पूर्वापरावस्थाभेदवान् न कूटस्थनित्यः स्यात्। परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यतइति भावः ॥२॥

सिद्धान्त्याह साध्यसमत्वादहेतुरिति । वृत्तयो हि वृत्तिमतो भिन्नास्तेन तासां नित्यत्वेऽपि न वृत्तिमान् कौटस्थ्याच्च्यवते । तथा च प्रत्यभिज्ञाता ऽऽत्मैव प्रत्यभिज्ञानाश्रयः स्यान्न त्वन्तःकरणं बुद्धिसंज्ञकं, न हि तत्प्रत्यभिज्ञाने प्रकाशत इत्यर्थः । क्रियानाधारत्वाच्च करणस्येति । प्रधानक्रियाऽनाधारः करणं प्रधानक्रिया चेयमुपलब्धिः स्मृतो यदाधारा प्रतीयते स कर्त्ता न करणं, तथा च प्रत्यभिज्ञानाद्युपलब्ध्या तदाधारः कर्त्ता ऽऽत्मा सिध्यति नित्यो न तु करणमित्यर्थः । क्रियामात्राभिधानेन शङ्कते । स्वक्रियेति । प्रधानक्रियामालम्ब्य निराकरोति । सत्यं भवतीति । ननु यदि भेदविवक्षया कर्त्रादिशब्दप्रवृत्तिरभेदविवक्षया च कारकशब्दप्रवृत्तिः कथं तर्हि कर्त्ता कारकं करणं कारकमित्यादिसामानाधिकरण्यं भेदाभेदविवक्षयोर्विरुद्धार्थत्वादित्यत आह । कारकशब्देनापीति (४४०।४) नाभेदविवक्षा विशेषाणां, किं तु सामान्यविवक्षा भिद्यतइति भेदो न भेदोऽभेद इति सामान्यस्याभिधानात् । तथा च सामान्यविवक्षया प्रवृत्तः शब्दस्तद्भेदाभिधानाद्भेदवाचिना सामानाधिकरण्यं प्रतिपद्यमान इतरेतरव्यावृत्ते विशेषेऽपादानादौ प्रवर्त्तते अन्यस्य कारकविशेषस्य कारकशब्देन सामानाधिकरण्यासंभवात् । पूर्ववदिति । द्वितीयाध्यायोक्तं कारकविशेषस्य लक्षणं स्मारयति । चोदयति यच्चान्यकारकेति । कारकाणामुपादानेन खलु प्रवर्त्तितः कर्त्ता कारकाण्युपादत्ते । तस्मादितराप्रयोज्यत्वमस्यासिद्धमित्यर्थः । परिहरति । न प्रयुज्यते फलस्य प्रयोजकत्वादिति । नाप्रयुज्यमानं कर्त्तारं ब्रूमोऽपि तु कारकाप्रयोज्यं, न च फलं कारकमित्यर्थः ।

उपेत्य प्रत्यभिज्ञानमन्तः करणे तस्येति । प्रत्यक्षं

चेत्प्रत्यभिज्ञानं नैकत्वे किं त्वनुमानं ततो यद्यत्प्रत्यभिज्ञायते तत्तदेकमिति न निदर्शनमस्ति, न हि तस्यैकत्वमन्यतो निश्चितमतः प्रत्यभिज्ञानात् । नाप्यनेकत्वं दृष्टं तथा चासाधारणतया हेत्वाभास इत्यर्थः । प्रत्यभिज्ञानस्वरूपावधारणे च सति विरुद्धो हेत्वाभासो बुद्ध्यनित्यत्वसाधनादिति । शेषं निगदेनैव व्याख्यातम् । चेतनाध्यवसायाभेदो बुद्धिलक्षणे ऽस्माभिर्विचारितः ॥३॥

क्रियमतो ऽवस्थानादुपयवस्थानप्रसङ्ग इति सूत्रार्थः । ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

आक्षेप्तुर्वचनं समाप्येवं कस्मान्नेति ( ४०३ । १५ ) समाधातुर्वचनं न कारणभेदे दृष्टत्वादिति । कारणभेदे हि सति एकस्य कर्तुर्युगपदनेकं कार्यं दृष्टम् । साङ्ख्यानां चान्तःकरणं कर्तृ व्यापकं चेति सर्वव्यापकेनान्तःकरणेनाधिष्ठितानीन्द्रियाणि युगपदेव कार्याणि कुर्युः । अस्माकं त्वन्तःकरणस्य करणत्वादेकेन्द्रियग्राह्ये ऽपि न युगपत्कार्योत्पाद इति विशेषः ।

गत्यभावाच्च प्रतिषिद्धं विभुनो ऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयत इति भाष्यस्य गत्यभावाच्च विभुनोऽन्तःकरणस्येति प्रतीकमनूद्य तस्यार्थमाह प्राप्त्यर्थस्य गमनस्याभावादिति । न चा ऽयुगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन प्रतिषिद्धमपि प्रत्यययौगपद्यं प्रतिपद्येत । तस्माद्विभुन्यन्तःकरणे ऽवश्यंभावि प्रत्यययौगपद्यं न चैतद्दृष्टं तस्मादन्तःकरणमणिवित्यर्थः । ननु दीर्घां शष्कुलीं भक्षयतः पञ्चानामपि ज्ञानानां युगपदुत्पादो दृष्ट इति को ऽयं प्रसङ्गः अन्तःकरणस्य विभुत्वे युगपदुत्पादः प्रसज्येतेत्यत आह । न च युगपत्प्रत्ययोत्पत्तावेति । अतिशीघ्रतया

युगपदुत्पादाभिमानो न तु तत्र यौगपद्यं भाविकमित्यर्थः ।

पुरुषो जानीते नान्तःकरणमिति स्वमतसमाधानपरं भाष्यं व्याचष्टे यस्य पुनर्वृत्तिर्वृत्तिमतोरिति । (४०४।१२) यदपि सांख्या आचख्युर्विषयान्तरव्यासक्ते ऽन्तःकरणे चक्षुरादिसंबन्धस्याप्यज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम्–एतेन विषयान्तरव्यासङ्ग इति । तदनुभाष्य वार्त्तिककारो व्याचष्टे । एतेनेति । तद्येति । नेत्यस्योपजीव्यमाह पुरुषो जानीते नान्तःकरणमिति । हेतुना विषयान्तरव्यासङ्गो ऽन्तःकरणस्य प्रत्युक्तः । व्यासक्तो हि स भवति यो जानीते । न चान्तःकरणं जानीते किं तु पुरुष इति तस्येदृग्व्यासङ्गो नान्तःकरणस्य, अन्यादृशस्त्वन्तःकरणस्य व्यासङ्गो न निषिध्यतइत्यर्थः ॥ ८ ॥

चोद्यभाष्यम् एकमन्तःकरणं नानावृत्तयइति तद्व्याचष्टे । एकमन्तःकरणं नानावृत्तय इति । नैतदिति । सम्यगाचष्टे जानीते संचक्षाणकः सांख्यः । सङ्ख्या हि समीचीना बुद्धिस्तया वर्त्तत इति सांख्यः । एतदुक्तं भवति–यद्यपि वृत्तयो नाना प्रतिभान्ति तथा ऽपि भ्रान्तिरियमन्तःकरणादेकस्मादभिन्नानां नानात्वानुपपत्तेः । तस्मात्स्फटिकस्य यथैकस्यापि तापिच्छजपाकर्णिकारादिकुसुमोपधानभेदाद्भेद औपाधिक एवमन्तःकरणमणेरपि स्वच्छस्येन्द्रियप्रणाडिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वं वृत्तिरिति च प्रत्यय इति ज्ञानमिति चाख्यायत इत्यर्थः ।

तदेतद् दूषयति । नानेकान्तादिति । ( ४०५ । ७ ) यो ऽपि वृत्तीनामौपाधिकभेदमाह तेनाप्युपाधयो ऽर्था आजानतो भिन्ना वक्तव्याः । तथा च भेदस्य द्विधा दर्शनादनेकान्तो

